

National Journal of
Hindi & Sanskrit Research

ISSN: 2454-9177
NJHSR 2024 1(52 ): 01-04

www.sanskritarticle.com

**Dr. T. Venkateswarlu**
M.A, PhD ,
Lecturer in Sanskrit ,
Govt. College For men (A),
Kadapa (AP) - 516004

**Correspondence:**
**Dr. T. Venkateswarlu**
M.A, PhD ,
Lecturer in Sanskrit ,
Govt. College For men (A),
Kadapa (AP) - 516004

# रामायणकाव्यस्य अखण्डप्रभावः

**Dr. T. Venkateswarlu**

कस्यापि महाकाव्यस्य स्पर्शशिला - कस्यचित् राष्ट्रस्य जनानां उपरि, तेषां संस्कृतिषु तस्य प्रभावः, यदा अस्मात् दृष्ट्या दृष्ट्वा वाल्मीकिस्य रामायणं रोम-ग्रीस-महाकाव्य-संस्कृतेः इव पुरातनं वा ऐतिहासिकं अवशेषं वा न तिष्ठति। अस्माकं देशस्य अखण्डसंस्कृतेः आधारः अस्ति तथा च अनेकशताब्द्याः अद्यपर्यन्तं भारतस्य जनानां जीवने कार्यात्मकः प्रभावः अभवत्।

विश्वस्य अन्येभ्यः ऐतिहासिककथानां अपेक्षया भारते रामायणस्य उत्तमकथाः अधिकाः लोकप्रियाः सन्ति। अस्माकं देशस्य सर्वजातीयानां जिह्वासु रामायणस्य आदर्शवाक्यानि जीवन्ति। उच्चतरस्तरं प्रति नेतुं शक्यते।

रामायण-अभियानम्, न केवलं भारते अपितु जावा, सुमात्रा, बोर्निओ इत्यादिषु द्वीपेषु अपि। अद्यत्वेऽपि तत्र रामः पूज्यते। रामकथा संस्कृतमूलभाषायां अनुवादद्वारा च पठ्यते। एशियामहाद्वीपस्य अनेकदेशेषु पुरातत्त्वविदां संशोधनद्वारा रामायणस्य सांस्कृतिकः प्रभावः अच्युतः अस्ति। अचतस्य जीवनं कलाश्च रामायणस्य प्राणिनः इव।

('The Ramayana in Greater India "Journal of Oriental Research" Volume 2. Page 120, Author K. A. Neelaknta Shastri) "आत्मत्यागस्य, वीरतायाः, दाम्पत्यप्रेमस्य च एषा महाकाव्यकथा इव अन्यस्य कस्यापि साहित्यिकस्य ग्रन्थस्य विश्वे एतादृशः प्रचारः न प्राप्तः। " ("प्राचीन/ भारत एवं भारतीय सभ्यता" पृष्ठ २५९, पी. मेसन आर्सेल् द्वारा।)

च

रामायणकाव्यं बहुकालात् भारतीयकाव्यस्य कविनां च आदर्शप्रेरणायाः स्रोतः अस्ति। (वरम् काल्टीनाधारम् १-४-२७) प्रेरकवर्णनैः, सरलगद्यैः, विविधैः सङ्गीतैः च विच्छिन्नम् इति वक्तुं न आश्चर्यम्। प्राचीनमध्ययुगीनभारते वाल्मीक्याः काव्यात् प्रेरणा न प्राप्नोत्, विषयात् च प्रेरणा न प्राप्नोत् इति कविः नासीत् । वाल्मीकिस्य रामायणं संस्कृतसाहित्ये प्रथममहाकाव्यस्य प्रतिरूपम् अस्ति । आलम र-२६ अस्य काव्यस्य विश्लेषणं करोति

महाकाव्यस्य लक्षणं कविभिः निर्मितम् । प्रथमं "सर्गबन्धो महाकाव्यम्" इति ।दण्डी इत्यनेन लिखितं प्रसिद्धं महाकाव्यं रामायणं आदर्शं गृहीत्वा लिखितम् अस्ति ?भारतमेव यत्र "लिएत" इति महाकाव्यस्य उत्पत्तिः अभवत् वाल्मीकिरामायणः देशे महाकाव्यानां स्रोतः अस्ति रामायणभाषायां अपि अनेके परिवर्तनाः, सुधाराः च अभवन्। परवर्ती कवयः तु रामयणस्य अनुष्टप् छन्दस्य अनुकरणं कृत्वा तस्य आख्यानसामग्रीणां वर्ण्यवस्तुतः प्रेरणाम् आकर्षयन्ति स्म। रामस्य जीवनस्य भागः न केवलं महाभारते अपितु सर्वेषु पुराणेषु अपि चित्रितः अस्ति। परन्तु काव्येषु, नाटकेषु, रामस्य, रघुवंशस्य विषये लिखितेषु

असंख्यकाव्येषु कालिदासः रामायणं "कविप्रथमपद्धतिः" वाल्मीकिं च "अध्यकवि" इति मन्यते स्म अपि च वाल्मीकिः भावनाभिः शब्दैः च तस्य एव कल्पनाशक्तिः अभिव्यञ्जकशक्त्या समृद्धा कर्तुं शक्यते। (वाल्मीकि कालिदास – ८.२. रङ्गस्वामी गारी स्मृतिग्रन्थं पृष्ठ ४१२ वि. राघवन) भवभूति इत्यनेन वाल्मीकिस्य श्लोकान् स्वनाटके मूलरूपेण समावेशितम्। सः अस्य प्रेरणादायिनी कविं प्रति श्रद्धांजलिम् अयच्छत्। राजा शेखरस्य मते वेदव्यासूदः वाल्मीकिस्य शिष्यः आसीत्। अश्वघोषः बौद्धः सन् बौद्धधर्मस्य इतिहासे सिद्धार्थस्य चित्रणं रामायणात् रामस्य आधारेण कृतवान्। न केवलम्। रामायणस्य प्रभावः भरवी, भट्टी, प्राकृतकविः अध्याराजः, बानु इत्यादिषु स्पष्टतया दृश्यते।

- भारतस्य प्रादेशिककाव्ये अपि रामायणस्य प्रभावः दृश्यते । ख्रीष्टस्य अनन्तरं ९ दशमशतकेषु यदा संस्कृतप्राकृतेभ्यः भारतस्य आधुनिकभाषाः उद्भूताः आसन् तदा तेषां कृते रामायणः मार्गदर्शकः अभवत् । संस्कृते एव वाल्मीकिसाक्षात्कृतं कथावस्तुं निष्कास्य अनेके रामायणाः रचिताः सन्ति। भूयस्

अद्यतनभारतीयभाषासु अपि रामचरिताः भिन्नरूपेण दृश्यन्ते। तमिल कम्बरामायणम्, तेलुगु द्विपद रामायणम्, मलयालम रामचरित, कन्नड थोरवे रामायणम्, बंगाली कृति वासिया रामायणम्, हिन्दी रामचरितमानसं, उड़िया बलरामदास रामायणम्, असम रामायणम्, मराठी भावार्थ रामायणम्, गुजराती राम बाला चरितम्, वाल्मीकी के रघुनाथ रूप गीतम, राजअष्ठान में प्रकाशित।

बौद्धजैनधर्माणामपि रामायणस्य प्रभावः नासीत्। "दशरथजकः" (४९० ई.पू.) "अनामिकायां जातके रामचरितस्य बौद्धरूपं अस्माकं समक्षं दृश्यते। विमलासुरी इत्यस्य "पा उमाचार्य" (१०० ई.) इत्यस्मिन् हेमचन्द्राचार्यस्य जैनरामयान (१२०० ई.) इति ग्रन्थे जैनपरम्परानुसारं रामस्य कथा कथ्यते .रामायणस्य सम्राट् अकबरस्य आदेशेन १५३५ ई. तमे वर्षे पारसीभाषायां अनुवादः अभवत् ।१९ तमे २० शताब्द्यां च रामायणस्य अनुवादः यूरोपीयभाषासु यथा आङ्ग्लभाषा, जर्मन, फ्रेंच, इटालियन, भारतस्य क्षेत्रीयभाषा च अभवत्।

कतिपयदिनानि पूर्वं चेकोस्लोवाकियाभाषायां अनुवादः अभवत्। वाल्मीकिस्य हिन्दीभाषायां रामायणस्य अनुवादाः अंशाः च विशेषतया उपलभ्यन्ते। तुलसीदासः कालिदास इव वाल्मीकिं स्वस्य आदर्शरूपेण गृहीतवान्।

लवकुजनाः रामायणगायनेन जनस्य ध्यानं आकर्षयितुं समर्थाः अभवन्। शतशः यावत् रामायणस्य सामूहिकगायनस्य प्रचलनं वर्तते। अद्यत्वे अपि श्रीरामनवमीमहोत्सवे वाराणसी-मदुरानगरेषु गायकानां स्वरात् रामायणस्य गायनं विशालं जनसमूहं मोहयति।

भारतस्य लाओस्, थाईलैण्ड्, कम्बोडिया, इन्डो-चीन इत्यादिषु देशेषु रामायणं लोकप्रियम् अस्ति । भारत-चीनदेशे तेषु देशेषु शिलालेखैः, आधारैः, शिल्पैः इत्यादिभिः रामायणस्य प्रचारः अतीव प्राचीनकालात् एव अभवत् इति न ज्ञायते। (प्राच्य अनुसंधान पत्रिका 6/2 नीलकान्त शास्त्री)।

रामकथस्य प्रथमं नाटकं हरिवंशे एव अभवत् । अद्यत्वे उत्तरभारते सर्वत्र विद्यते वाद्यते रमलीयां वयं पश्यामः। नवरात्रि-उत्सवेषु विशेषतः चैत्र-अश्वयुज-मासेषु रामायणस्य अनेके दृश्यानि अभिनयन्ति । अन्ते रावणः कुम्भकर्णः मेघनाथः च पूर्वस्य प्रतिमाः दहन्ति, येन पापस्य उपरि गुणस्य विजयः जातः इति सूचयति। उत्तररामचरिते भवभूति रामसीता च स्वजीवनसम्बद्धानि बिम्बानि पश्यन्तौ चित्रितौ। भारते अनेकेषु प्रदर्शनीभवनेषु रामकथासम्बद्धानि चित्राणि सुरक्षितानि सन्ति। वयं जानीमः यत् रामायणस्य महाभारतस्य च दृश्यानां कलाविकासे बहु योगदानम् अभवत्। सचित्ररामायणस्य केचन तत्त्वानि लण्डन् इण्डियाकार्यालयग्रन्थलयम् इत्यत्र सुरक्षितानि सन्ति। रामायणस्य बहवः दृश्याः राजपूतशैल्या, कलाग्राशैल्याः च चलच्चित्रेषु चित्रिताः सन्ति। जोधपुरस्य कलाशालायां शतवर्षपूर्वस्य रामायणसम्बद्धानां ५१ चित्राणां संग्रहः अस्ति। एकः। कनिङ्घमस्य महासायसंकलने रामायणस्य चित्रसङ्ग्रहः अस्ति । — ९.

प्राचीनभारते स्थापनकलासम्बद्धेषु आदर्शेषु रामायणे वर्णितः नागः अस्ति रामप्रसादयोः प्रभावः दृश्यते।(रामायणस्य केचन वास्तु-शिल्पखण्डाः लेखकः: सी. सिवराममूर्तिः, "प्राच्यसंशोधनपत्रिका" खण्डः १३. भागः, पृष्ठं ८७-९२) काण्डसालस्य अनन्तरं वाल्मीकिः कथयति यत् रावणस्य प्रासादः प्राकारस्य प्राचीरेषु निगूढः अस्ति। पराकाराः च... decorations on them सञ्चीस्य तोरणेषु निहिताः ज्यामितीयविन्यासाः अमरावतीयाः रेखीयविन्यासैः सह तुलनीयाः सन्ति।तेषां वर्णनं वयं कौटिल्यस्य अर्थशास्त्रे प्राप्नुमः।लङ्कायां सुवर्णबेलैः अलङ्कृतानां तोरणानां अनुकरणं अमरावतीयां कृतम् आसीत्। पत्राणि यथा दर्शितानि सन्ति स्तम्भं परितः।

बरहत, बुद्ध गया, अमरावती, उदयगिरी इत्यादिषु स्थानेषु गजः देवीं लक्ष्मीं स्नानं कुर्वन् चित्रितः अस्ति। अयं दृश्यः पुष्पकविमानस्य स्मरणं करोति। तस्मिन् लक्ष्मीः कमलासने गजैः सह संस्थितः। पद्महस्तेषु सा चित्रिता अस्ति । (5-7-14) सञ्चीयां आर्कः

रामप्रसादयोः प्रभावः दृश्यते। (रामायणस्य केचन वास्तुशिल्पखण्डाः लेखकः: सी. सिवराममूर्तिः, "प्राच्यसंशोधनपत्रिका" खण्डः १३. भागः २, पृष्ठं ८७-९२) काण्डसालस्य अनन्तरं वाल्मीकिः कथयति यत् रावणस्य प्रासादः प्राकारस्य प्राचीरेषु निगूढः अस्ति। पराकाराः च... decorations on them सञ्चीस्य तोरणेषु निहिताः ज्यामितीयविन्यासाः अमरावतीयाः रेखीयविन्यासैः सह तुलनीयाः सन्ति।तेषां वर्णनं वयं कौटिल्यस्य अर्थशास्त्रे प्राप्नुमः।लङ्कायां सुवर्णबेलैः अलङ्कृतानां तोरणानां अनुकरणं अमरावतीयां कृतम् आसीत्।पत्राणि यथा दर्शितानि सन्ति स्तम्भं परितः ।

बरहत, बुद्ध गया, अमरावती, उदयगिरी इत्यादिषु स्थानेषु गजः देवीं लक्ष्मीं स्नानं कुर्वन् चित्रितः अस्ति। अयं दृश्यः पुष्पकविमानस्य स्मरणं करोति। तस्मिन् लक्ष्मीः कमलासने गजैः सह संस्थितः। पद्महस्तेषु सा चित्रिता अस्ति । (5-7-14) सञ्चीयां आर्कः

लक्ष्मी उपविष्टा द्वारे स्थिता बहुमुद्रासु उत्कीर्णा।

यथा वाल्मीकिना प्रोक्तं पुष्पकविमानं निशाचारुणा आकाशे प्रयुक्तम्। (महासन व्योमचार २: ५-८-७)

वाल्मीकिः कथयति यत् पुष्पस्तम्भाः एहमरिगम् (कलाकारेन स्वकल्पनाद्वारा चित्रितः चित्रात्मकः पशुः) इत्यनेन अलङ्कृताः आसन्। शिल्पस्य एतत् वर्णनं बरहत, सांची, बुद्धगया, मथुरा, अमरावती इत्यादिभिः प्राचीनकेन्द्रैः सह सम्बद्धम् अस्ति । तथा गज-अश्व-महिषाः अस्मिन् पशुवर्गे गण्यन्ते।

भानुनाम्रा 'बालाचरित्रा', 'अभिषेकप्रतिमा' इति नाम्ना प्रचार्यमाणानि नाटकानि रामायणस्य दृश्याधारितानि सन्ति। तस्मिन् समस्तं रामकथा आगत्य आगतं च। रामायणकथामाश्रित्य संस्कृतनाटकस्य आरम्भः युक्तम्। भवभूतिः वाल्मीकिस्य महावीरचरितस्य उत्तररामचरितस्य च आधारेण स्वस्य त्रीणि नाटकानि रचितवान्।

दिजनागुनि। 'कुण्डमाला', राजा शेखर का बलराम यनम्, मुरारी का अनारघ तथुवम, जयदेव का प्रसन्न राघव, रामभद्र दीक्षित का जानकी परिणयम आदि। मुरारी टिप्पणीं करोति यत् वाल्मीकिः वणिजानां कृते सामूहिकं कोषं संग्रहितवान्, ये संस्कृतनाट्यकारानाम् प्रतिरूपाः अभवन् ।

वाल्मीकिः पुष्पकं कथयति यत् विमनस्तम्भाः आर्यस्त्री इव दीप्ताः सन्ति। ज्ञायते यत् एतत् काव्यं जग्गैयपेट्, मथुरा, भुव नेस्वरम् इत्येतयोः तीर्थेषु शमुप्रस्त्र टिकरूपारूपेण सम्भामूलवैदिकअप्सराणां सुन्दरप्रतिमारूपेण उत्कीर्णम् आसीत् । तथा वाल्मीकिः पुष्पकस्य उड्डयनं श्रेष्ठजातीयहंसैः वहति इति वर्णयति । (हंसा प्रते कैरिक वह्यामनम् ५_७-७) अमरावतीस्थेषु प्राचीनशिलाचित्रेषु स्तम्भमूले हंसरेखाः निर्मिताः सन्ति। एतादृशानि बहूनि उदाहरणानि घण्टसाल-नागार्जुन-पर्वतेषु दृश्यन्ते। कमलपात्रग्राहिणः हंसाः विशेषतया बेलुर, हलयबिड़ु इत्यादिषु मध्ययुगीनकलायां चित्रिताः सन्ति । ("रामायण में कुछ वास्तुशिल्प अंश" - प्राच्य अनुसंधान जर्नल, 13. भाग 2, पृष्ठ 91 - 2, लेखक सी. शिवराममूर्ति),

रामायणे रावणं तस्य राज्ञीनां च निद्रायां मुग्धानां च वर्णनं करोति । वाल्मीकिः सुप्तराक्षसरामान् वाद्यं आलिंग्य निद्रां कुर्वन्तः सुन्दरं चित्रितवान् अस्ति। अयं दृश्यः अमरावतीनगरस्य एकः पाषाणपट्टिका अस्ति यत्र हिन्दुपुनर्जीवनं उत्कीर्णम् अस्ति।

वाई मापदण्डानुसारं प्राचीनभारतस्य निर्मातारः वाल्मीकि-रामायणस्य संरचनात्मकचिह्नानां प्रयोगं कृतवन्तः इति अस्माकं कृते स्पष्टं भवति।

"भारते रामायणं, महाभारत, राम, सीता, हनुमान्, राम - विष्णु, गरुड, कृष्ण, राधा - कौरव, पाण्डव - सर्वत्र चित्रिताः सन्ति। तेषां प्रतिमाः वयं भित्तिषु मन्दिरेषु भवनेषु च, अलङ्कृतेषु चिनाकारेषु, ताम्रेषु च द्रष्टुं शक्नुमः।" लोहादि गृहोपकरणम् ।

मन्दिरसंरचनासु शिलाशिल्पेषु च रामकथाः विशेषतया उत्कीर्णाः सन्ति। एतेषां नमूनानि विशेषतया देवगधामस्य गुप्तकालस्य दशवतारमन्दिरेषु, हलायविदु (होयसल) हजारानां राममन्दिरेषु च दृश्यन्ते। एलोरा इत्यत्र सैलसगुहायां शिलाभित्तिः रामायणस्य श्लोकैः अलङ्कृता अस्ति । ("भारतीय-इन्डोनेशिया-कला-इतिहासः" पृ. ७९. लेखकः आनन्दकुमारस्वामी) रामायणे रामस्य मानवरूपेण चित्रितः अस्ति। परन्तु सामान्यजनाः तं विष्णोः अवतारं मन्यन्ते। पाश्चात्यविद्वान् 'रिज्वे' (अयूरोपीयजातीनां नाटकानि नाटकीय-नृत्यानि च, पृष्ठं १३३), हिन्दुदेवताः केवलं प्रकृतेः प्रतिनिधित्वं न भवन्ति। ते न अदृश्या अदृश्या अप्सराः, ते सद्विशिष्टगुणयुक्ताः स्त्रीपुरुषाः तेषां पराक्रमः आदर्शगुणाः कष्टानि च तत्कालीनलोकं बहु चालितवन्तः।

रामस्य अद्वितीयगुणाः तं दिव्यदर्शनैः सह तुल्यं कुर्वन्ति। रामस्य बौद्ध-इतिहासः धर्मसुधारकर्तृभ्यः महतीं प्रेरणाम् अयच्छत्। १३ शतके रामानुजाचार्यः विष्णुस्य सार्वभौमत्वस्य घोषणां कृत्वा दक्षिणदेशे एकेश्वरस्य प्रचारं कृतवान्। रामानन्दः १८-१४ शतकेषु उत्तरदेशे अपि तथैव अकरोत्। एवं प्रकारेण रामायणः भारतीयजीवनस्य संस्कृतिस्य च भागः अभवत्।

वाल्मीकिलिखिता रसमाधुर्य महाकाव्यं भगवतः रामस्य जीवनस्य विचित्रकथा अस्ति। "अयम् यावद् पर्वता लोके नियताः तावत् नद्यः प्रवहन्ति" इति । दु (यवस्त्यासैटी विराय्याह साश्वा महिताले तिवमा याना कालाशुशुः शिश्याति (१.२.३६,७)) "नव भाषायां रामायणः नूतनः तुकः भारतस्य भूतकालस्य वर्तमानस्य च सर्वे राजनैतिक-नैतिक-सामाजिक-आदर्शाः पूंजीवादीः सन्ति, यावत्पर्यन्तं... हिन्दुजातिः वैदिकसिद्धान्तानुसारं विशिष्टैककत्वेन विद्यते।रामायणं सर्वदा आर्यसभ्यतायाः कुलीनतायाः च आभां विकीर्णं करोति।(भारतस्य औद्योगिककला, पृष्ठं ३१,३ लेखकः जार्ज सी. यम, बुर्तुड।) अहं पश्यामि विशाल एशियायाः विशालाः प्राचीनाः भूमिः यत्र अहं मनसि सन्तुष्टः अस्मि।सुन्दरं महाकाव्यं प्राप्यते।शुभसूर्यस्य कान्तिवत् प्रकाशमानं हिन्दमहासागरवत् विशालं, दिव्यसङ्गीतं सर्वत्र विक्षेपरहितं वर्तते।तत्र गहनं राज्यं करोति शान्तिः।समुदायस्य अपारं माधुर्यं, असीमदया, सर्वेषां जनानां प्रेम, दया, उदारता च गहनं समुद्रं व्याप्नुवन्ति।“ (जवाहरलाल नेहरू कृत ‘हिन्दुस्तान’ की कहानी’ इत्यस्मात् पृष्ठं ११९) *



National Journal of
Hindi & Sanskrit Research

ISSN: 2454-9177
NJHSR 2024 1(52 ): 14-17

www.sanskritarticle.com

**मधुकरप्रसादपाण्डेय:**
शोधछात्र:,शिक्षाशास्त्रविभाग,
श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृत-
विश्वविद्यालय,कुतुबसंस्थानिकक्षेत्रम्,
नवदेहली

**डॉ पिंकी मलिक**
सहायकाचार्या, शिक्षाशास्त्रविभाग:,
श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविश्व-
विद्यालय:, कुतुबसंस्थानिकक्षेत्रम्,
नवदेहली

**Correspondence:**
**मधुकरप्रसादपाण्डेय:**
शोधछात्र:,शिक्षाशास्त्रविभाग,
श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृत-
विश्वविद्यालय,कुतुबसंस्थानिकक्षेत्रम्,
नवदेहली

# शैक्षिकोपलब्धे: अवधारणा

**मधुकरप्रसादपाण्डेय:, डॉ पिंकी मलिक**

**प्रस्तावना**

प्रत्येकं बालकस्य व्यवहारे केचन परिवर्तनानि आनेतुम् उद्देश्यं कृत्वा कोऽपि विषयः पाठ्यते। अतः विषयविशेषस्य अध्ययनेन प्राप्तं ज्ञानं उपलब्धि: भवति। उपलब्धिरन्तर्गते ते सर्वे विषया: समागच्छन्ति येषामध्ययनं व्यक्तिविशेषात कृतम् अस्ति।

शैक्षणिकयोग्यता विद्यार्थिभि: प्राप्तसफ़लताया: स्तरस्याध्यापकै: कृत एतादृशं मूल्यांकनमस्ति येन विद्यार्थी शैक्षणिकनिर्देशान् अवगन्तुं पुनरुत्पादयितुं च प्रयतमानानां सफलतायाः स्तरस्य मूल्याङ्कनं भवति, तथैव स्वस्तरस्य आयुः व कृते निर्धारितपाठ्यक्रमलक्ष्याणि प्राप्तुं प्रयतन्ते। यस्य च प्रमाणं परीक्षायां तेषां कृतकार्यै: प्राप्यते।

अनस्टासी (१९६१) टायलर: (१९६८)

विशेषतया वक्तुं शक्यते यत् शैक्षणिकयोग्यता छात्रेन स्वस्य शैक्षणिकयोग्यतायां प्राप्तानां अङ्कानां समग्रं योगः भवति ।

सामान्यतया शैक्षिकोपलब्धे: अर्थः यत् छात्रः विद्यालये महाविद्यालये व विषयेषु यत् प्रवीणतां प्राप्नोति सैव शैक्षिकोपलब्धि:। अन्येषु शब्देषु विद्यालयस्तरस्य शिक्षाप्रक्रियाद्वारा छात्रस्य मानसिकक्षमतायाः वास्तविकं रूपम् एतत् । वस्तुतः छात्रेण प्राप्तः प्रतिशताङ्कैः श्रेण्या वा विज्ञायते।

सामान्यतः कस्मिंश्चित् काले दत्तं ज्ञानं कियत् अवशोषयति इति अर्थः गृह्यते, परन्तु वस्तुतः उपलब्धे: अत्यन्तं विस्तृतोर्थो वर्तते । विभिन्नैः विद्वांसैः उपलब्धे: अनेका: परिभाषाः दत्ताः सन्ति।

**सोथी महोदयानुसारम्-** उपलर्ब्धिनाम् कस्याश्चित्कार्यस्य पूर्ति: उच्चतरज्ञानस्य प्राप्तिः, भौतिकवस्तुभि: मानवविचाराणां दक्षतया संगठित रूपेण वा प्रप्ति:, स्वकार्याणि शीघ्रतया आत्मनिर्भरतया च सम्पन्नं कृत्वा, उच्चस्तरं प्राप्तुं, स्वं अन्येभ्यः श्रेष्टेभ्य: अग्रे गन्तुं स्वस्य माध्यमेन आत्मसम्मानं वर्धयितुं च सफलतां वर्धनम् ।

**एडकिन्स् महोदयानुसारम्-** उपलब्धिः भिन्नप्रतिक्रियाणां संयोजनम् अस्ति ।

(क) उपलब्धिः भिन्नप्रकारकोत्तेजनानां विस्तारः भवति येन छात्रा: संवेदनशीला: प्रतिक्रियाशीलाश्च भवन्ति।

(ख) नूतनप्रतिक्रियाणां विस्तारः यत् लोकप्रियं उत् वा विभेदीकृतं उत्तेजकघटकस्य उपस्थिति: नास्ति।

(ग) नूतनप्रतिक्रियाणां विस्तारः यस्य निर्माणम् अपूर्वोत्तेजकपरिस्थितौ भवेत्, ज्ञानक्षेत्रे कियत् प्रवीणः अस्ति, एषा कार्यक्षमता तस्य उपलब्धिः परिणामः वा।

रावतमहोदयानुसारम् – उपलब्धे: अन्तर्गत ता: वार्ता: आयान्ति यत् कस्यचित व्यक्तिविशेषेण कस्यचित विषयस्य अध्ययनानन्तरं प्राप्ताः सन्ति।

**एनेस्टैसी इत्यस्य मतानुसारेण-** सक्रियात्मकरूपेण उपलब्धे: परिभाषा एतादृशी दीयते शैक्षिकदक्षता इति छात्रै: शैक्षिकनिर्देशान् अवगन्तुं पुनः अभिव्यक्तुं च प्रयत्नतः तथा च स्वस्तरानुसारं निर्धारितपाठ्यक्रमस्य लक्ष्याणां प्राप्तौ उच्चस्तरस्य सफलतायाः मूल्याङ्कनं भवति । तथा च तस्य प्रमाणं तेषां परीक्षाद्वारा लभ्यते।

**टायलरमहोदयानुसारम् –** अधिकं उत् वा विशिष्टरूपेण इदम् वक्तुं शक्यते यत् शैक्षिकयोग्यता छात्रैः स्वशैक्षिकपरीक्षायां प्राप्तानां अंकानाम् समग्रयोगो भवति ।

**फ्रीमैनमहोदयानुसारम् –** शैक्षिकोपलब्धे: परीक्षणम् अभिकल्प: वर्तते यत् एकः कस्यचित् विशेष विषयस्य अथवा पाठ्यक्रमस्य विभिन्नविषयेषु व्यक्ते: ज्ञानं तथा च कौशलानां मापनं करोति।

**सुपरमहोदयानुसारम् -** एका उपलब्धिपरीक्षणम् अथवा क्षमतापरीक्षणं एतदर्थं क्रियते यत् कश्चन व्यक्तिः किं कियत् च ज्ञातवान्, सः कियत् सम्यक् कार्यं कर्तुं शक्नोति इति ज्ञातुं शक्यते।

**इवैलमहोदयानुसारम्-** उपलब्धिपरीक्षणं तदभिकल्पो वर्तते यत् छात्रै: ग्रहणं कृतं किञ्चित् ज्ञानं काचित कौशलं काचित प्रवीणतां वा मापयति।

**भार्गव एम.सी.महोदयानुसार-** उपलर्ब्धिनां कस्यचित् विषयस्य विभिन्नविषयेषु वा कस्यचित् प्रशिक्षणस्य शिक्षणस्य च निश्चितकालस्य अनन्तरं ज्ञानस्य अवगमनस्य च मापनं कृत्वा प्राप्त परिणामः उपलब्धि: भवति । अस्मिन् विषये अध्ययनं भवति यत् व्यक्तिः एतेषु विषयेषु कियत् परिश्रमं कृतवान्, तस्य केषां विशेषक्षमतानां विकासः अभवत् ।

उक्तपरिभाषाः हृदये गृहीत्वा निष्पत्तिपरिक्षणै: अस्माकमभिप्राय: एतादृशेभ्य: परीक्षणेभ्य: वर्तते यत् एकनिश्चित अवधे: प्रशिक्षणं एवं अधिगमोपरान्ते ज्ञानस्य एवं समक्षस्य कस्यचित् एकविषयविशेषेषु वा विभिन्नेषु विषयेषु मापनं क्रियते।

प्रायः विद्यालयानां समक्षे विषयेषु ज्ञानमापनार्थं तेषां उपयोगः भवति यतोहि तेषां मुख्य उद्देश्यं ज्ञानमापनं तथा च शैक्षिकपूर्वकथनमपि भवति ।

सामान्यत: शैक्षिकोपलब्धे: ज्ञानं तथा च ज्ञानार्जनस्य तस्या: सीमाया: अर्थ: क्रियते यत् विद्यालय उत् वा महाविद्यालयेषु विषयेषु कस्यचित विद्यार्थिद्वारा प्राप्तिर्भवति।

**उपलब्धिपरीक्षणम्-**

उपलब्धिपरीक्षणस्य अर्थः अस्ति यत् शिक्षकः स्वस्य अनुभवान् मूल्यानि च छात्राणां समक्षं प्रस्तुतं करोति यत् ते सांस्कृतिकसम्पत्ते: रक्षां कुर्यु:, तथा च तस्य स्वव्यवहारे इष्टपरिवर्तनं भवेत। विद्यालये स्थित्वा बालक: यत् किमपि अधिगमं करोति तदेवोपलब्धि: कथ्यते। अस्योपलब्धेः परीक्षणार्थं या: परीक्षाः गृह्यन्ते ते उपलब्धिपरीक्षणम् (Achievement Test) इति उच्यन्ते। शिक्षकाणां विद्यालयानां च प्रथमं दायित्वं भवति यत् तेषां छात्राणां उपलब्धीनां मूल्याङ्कनं करणीयम्। शिक्षायाः उद्देश्ये परिवर्तनेन संशोधनं च निकषा मूल्याङ्कनमापनप्रक्रिया अपि परिवर्तमानं भवति ।

छात्राणां प्रगतेः विषये ज्ञानं प्राप्तुं शिक्षकः समयानुसारं तेषां परीक्षां गृह्णाति। एतेषां परीक्षाणां उद्देश्यं छात्राणां सफलतायाः मापनं भवति । शिक्षकः अस्मिन विषये आश्वस्तं भवितुम् अर्हति यत् छात्रः विषयसम्बद्धं योग्यतां पूर्णतया प्राप्तवान् वा न वा। अस्या: परीक्षाया: प्राप्ताङ्काः छात्रस्य कस्मिन्चित् एकस्य क्षेत्रे सफलतायाः ज्ञानं कारयन्ति। बालकानां योग्यतायाः तुलना उपलब्धिपरीक्षाद्वारा भवति। अस्मिन् परीक्षायां वयं सापेक्षिकसफ़लतामुपरि न पूर्ण सफ़लतामुपरि बलं दद्मः । यदि कश्चन छात्रः कस्मिन् अपि विषये त्रिंशत अंकान प्राप्नोति। तथा च द्वितीयः छात्रः ५५ अंका: प्राप्नोति, ततः प्रथमः छात्रः द्वितीयस्य छात्रस्य अपेक्षया योग्यतायां २५ अंकाः न्यूना भवन्ति। इदमपि सम्भवति यत् परीक्षा अतीव कठिना भवेत् तथा च कोऽपि छात्रः ३६% (उत्तीर्णाङ्काः) प्राप्तुं न शक्नोति। एतादृशे सति कोऽपि छात्रः योग्यः नास्ति इति वक्तुं न शक्यते । अतः छात्राणां अङ्कं दत्त्वा तेषां वर्गीकरणं कृत्वा मध्यमाङ्कान् ज्ञात्वा पश्यामि यत् छात्रस्य अङ्काः मध्यमाङ्कापेक्षया कियत् न्यूनाः भवेयुः येन तस्य क्षमता सफला इति वक्तुं शक्यते। अधुना स्पर्धापरीक्षासु एषा एव नीतिः प्रयुक्ता भवति ।

**उपलब्धिपरीक्षणस्य परिभाषाः**

1. इबेल् – उपलब्धिपरीक्षणं तद् वर्तते यत् छात्रद्वारा ग्रहणं कृतं ज्ञानं अथवा कस्मिश्चित कौशले निपुणतायाः मापनं क्रियते ।

2. गैरिसन इत्यादयः – उपलब्धिपरीक्षणं बालस्य वर्तमानक्षमतां वा विशिष्टविषयक्षेत्रे तस्य ज्ञानस्य सीमाया: मापनं क्रियते ।

3. फ्रीमैन् – उपलब्धिपरीक्षणं तद् परीक्षणं वर्तते यत् कस्यचित् विशेषविषयस्य अथवा पाठ्यक्रमस्य विभिन्नविषयेषु व्यक्तज्ञानाव-गमनस्य तथा च कौशलानां मापनं क्रियते ।

4. सुपर – ज्ञानार्जनपरीक्षणं तु इदं ज्ञानाय प्रयुक्त: क्रियते यत् छात्र: किम कियच्च अधिगम: कृत:, तदनु किमपि कार्यं कियत सहजतया कर्तुं शक्नोति ।

5. थॉर्नडाइकः तथा च हेगन महोदयानुसारम्- यदा वयं समप्राप्तिपरीक्ष प्रयोगं कुर्मः तदा वयं निर्धारयितुम् इच्छामः यत् विशिष्टप्रकारस्य शिक्षाप्राप्ति: उपरान्ते कश्चन व्यक्तिः किं ज्ञातवान् ।

6. प्रेसी रॉबिनस तथा च होरोकमहोदयानुसारम् – सम्प्राप्ति परीक्षाणां निर्माणं मुख्यतया छात्राणां अधिगमस्वरूपस्य तथा च सीमाया: मापनं क्रियते ।

7. लिण्डक्विस्ट एवं मन: - सामान्य निशपत्तिपरीक्षणं तद् भवति यत् एक फ़लाङ्क द्वारा निशपत्ते: कस्यापि प्रदत्तक्षेत्रे छात्रस्य सापेक्षिकज्ञानस्य बोधनं क्रियते ।

**उपलब्धिपरीक्षणस्य महत्त्वम्**

1. व्यक्ते: विशेषकार्ये निम्नतमयोग्यतानां मापने सहायको भवति ।

2. विभिन्नक्षेत्रेषु व्यक्तिनां चयनाय, विद्यालयेषु छात्राणां प्रवेशाय च अस्योपयोगः भवति।

3. अस्योपयोग: विविधप्रकारस्य वर्गीकरणं तथा च नियुक्तिं कर्तुं वितृतरूपेण क्रियते ।

4. परीक्षणमिदं वर्गनिर्धारणं तथा च पदोन्नतौ प्रयोगस्य दृष्टेः महत्त्वपूर्णं वर्तते।

5. इदं परीक्षणं बालकेभ्य: शैक्षिकव्यावसायिकनिर्देशान प्रदातुं अपि सहायको भवति।

6. चिकित्सापरामर्शक्षेत्रे अस्य प्रयोग: व्यापकरूपेण क्रियते। शैक्षिकोपलब्धिषु विशेषरूपेण पृथक छात्राणां अभिज्ञानं निदानं तथा चोपचारात्मकशिक्षणस्य दृष्ट्या एताः परीक्षाः अतीव महत्वपूर्णा: भवन्ति ।

7. एतैः परीक्षणैः छात्रः सम्यकतया ज्ञातुमर्हति यत् येन् कियत पठितम् तथा च कियत् पठनम् अवशिष्टम् अस्ति ।

8. भविष्ये अधिगम हेतोः प्रेरणा अपि प्राप्नोति।

9. अस्य साहाय्येन शिक्षकस्य कौशलानां प्रभावशीलतानां च मूल्याङ्कनं क्रियते ।

10. इमानि परीक्षणानि विभिन्नशिक्षणविधिनां प्रभावशीलतायाः अपि मूल्याङ्कनं कुर्वन्ति, तथा च उत्तम-विधि-चयनार्थं शिक्षकस्य सहायतां कुर्वन्ति।

11. एतेषां आधारेण विभिन्नविद्यालयानाम् शैक्षणिकस्तरस्य तुलनात्मकाध्ययनमपि सम्भवति।

12. अस्य प्रयोग: पाठ्यवस्तोः संशोधने अपि सहायकः भवति।

13. एतैः परीक्षणैः छात्रेषु धैर्यं, विनयम्, परिश्रमम् इत्यादीनां गुणानां विकास: भवति।

14. एतेषु परीक्षणेषु छात्रस्य सर्वतोमुखी मानसिकक्षमतायाः विषये ज्ञानं कारयति ।

15. अस्य निर्माणाय तथा च तत्सम्बद्धसाहित्यस्य अध्ययनेन च शिक्षकेषु स्वव्यावसायिककौशलस्य विकास: भवति।

16. अभिभावकेभ्यः सूचना प्रदानं तथा च छात्रेभ्यः प्रमाणपत्र प्रदानम् ।

**उपलब्धिपरीक्षणस्य विशेषताः**

1.अस्योद्देश्यं पूर्वमेव निर्धारितं भवति।

2.एताः परीक्षाः भिन्नवर्गस्य छात्राणां कृते पृथक् पृथक् क्रियन्ते।

3.अस्य पाठ्यक्रमः छात्राणां स्तरयोग्यतारुचिक्षमतानां च अनुकूलः भवति।

4. इमानि परीक्षणानि व्यावहारिकदृष्ट्या उपयोगिनो भवन्ति।

5. अस्य प्रशासनं अङ्कनं समयसीमा पूर्वमेव निश्चितं भवति ।

6.अस्य प्रश्नाः वस्तुनिष्ठाः भवन्ति। अतः आंशिकरूपेण अङ्कप्रदानस्य प्रश्ना: एव न भवन्ति ।

7. अस्मिन्तु प्रश्नानां संख्या अतीवाधिका भवति। अतः संयोगस्य उत् वा भाग्यस्य प्रश्नः एव न भवति ।

8. अस्य विषय-सामग्री व्यापका भवति।

9.इमानि परिक्षणानि विभेदीकृतानि भवन्ति, अनेन सह विश्वसनीयाः वैध्या: च भवन्ति ।

10.अस्मिन मानकीकृतपरीक्षाणां सर्वविशेषता: विद्यमाना: भवन्ति। यथा अङ्कनकुंचिका, निर्देशपुस्तिका, मानकन च । अस्य सिध्दता तु पूर्वमेव सज्जीकृयते। तथा च एतत पुस्तिकारूपेण मुद्रितानि च भवन्ति।

11.एताषां परीक्षाणां परिक्षाफ़लैः अध्यापकान एतादृशी सामग्रीं प्राप्नोति यस्याधारेण तेन सम्पूर्णं शिक्षणयोजनाया: निर्माणं क्रियते।

उपर्युक्तपरिभाषाणामाधारे वयं वक्तुं शक्नुमः यत् – उपलब्धयः ताः सन्ति येषां साहाय्येन विद्यालये पाठ्यमाणेषु विषयेषु छात्राणां सफलतायाः उपलब्धेः वा ज्ञानं, अधिगमकौशलस्य च ज्ञानं प्राप्यते।

**उपलब्धिपरीक्षस्य महत्त्वम्**

शिक्षा तथा मनोविज्ञानस्य क्षेत्रे उपलब्धिपरीक्षणैः अतीव महत्त्वपूर्णं स्थानम् अस्ति। अस्य प्रयोगः बहुप्रयोजनानां कृते भवति। थार्नडाइक हेगन महोदयेभ्य: विद्यालयस्य दृष्ट्या उपलब्धि-परीक्षणस्य महत्त्वं एतेषु शब्देषु प्रकटितवन्तौ यत् –

1.छात्राणां वर्गीकरणम् – उपलब्धिपरीक्षणैः छात्रा: यान् अङ्कान् प्राप्नुवन्ति तेन तेषां मानसिक-बौद्धिक-स्तरयोः ज्ञानं भवितुमर्हति। अतः मानसिकस्तरानुसारं तेषां वर्गीकरणं कर्तुं शक्यते ।

2.छात्राणां समस्यानां निदानम् – एताभिः परीक्षाभिः छात्राणां समस्यानां ज्ञानं भवति । समस्या ज्ञात्वा तस्य निवारणार्थं उपाया: क्रियन्ते। अनेन दृष्ट्या छात्राणां प्रगतेः योगदानं दातुं शक्नुवन्ति ।

3.छात्राणां प्रेरणा – अनुभवेन ज्ञायते यत् छात्रेभ्य: प्रेरणां प्रदाय अपि एताः परीक्षाः सफ़लिकृताः । यदा छात्रैः ज्ञायते यत् तेषां अर्जितज्ञानस्य परिक्षणं भवति तदा छात्रान् प्रेरणा मिलति ।

4.व्यक्तिगतसहाय्यम् – उपलब्धिपरीक्षणद्वारा सरलतया मन्दबुद्धि-युक्तानां, विशेषक्षमतायुक्तानां छात्रान ज्ञात्वा तेषां आवश्यक्तानुसारं सहाय्यं कर्तुं शक्यते।

5. शैक्षणिकमार्गदर्शनम् – अस्याः परीक्षायाः आधारेण छात्रैः प्राप्तान् अङ्कान् तेषां पूर्ववर्तमानं च अङ्कान् दृष्ट्वा तेभ्यः समुचितं मार्गदर्शनं दातुं शक्यते यत् ते के विषयाः ग्रहीतव्याः? इत्यादि ।

6.छात्रान् परामर्शः – उपलब्धिपरीक्षणेभ्य: अस्माभिः ज्ञायते यत् छात्राणां रुचिः का अस्ति । तेषां योग्यता, कार्यक्षमता च काः सन्ति ? अनेन आधारेण तेभ्यः अग्रे अध्ययनार्थं परामर्शं दातुं शक्यते।

लिण्ड्क्वस्ट तथा च मनमहोदयानुसारम् – उपलब्धिपरीक्षाणां निम्नलिखितप्रयोगानाम् चर्चां कृतवन्तौ :-

1. अध्ययनहेतोः प्रोत्साहनम् – उपलब्धिपरीक्षणं छात्रान् अध्ययनार्थं प्रोत्साहनं प्रेरणाञ्च ददाति। एकेन प्रकारेण परीक्षाः छात्राणां कृते प्रेरणाम् अपि प्रयच्छन्ति।

2. शिक्षणपद्धत्यां सुधारः – शिक्षक: छात्रश्च द्वऔ एव परीक्षापरिणामाधारेण शिक्षणपद्धतेः सफलताया: मात्रा ज्ञातुं

शक्नुवन्ति, आवश्यकतानुसारं तस्य सिध्दतायाः प्रयत्नं कर्तुं शक्यते। परीक्षायाः उत्तरपत्राणाम् आधारेण आचार्यः आत्मना स्वीकृतस्य शिक्षणपद्धतेः सफलतां ज्ञातुं शक्नोति।

3. मान्यताप्रदाने सहायकः – परीक्षापरिणामाधारेण कुत्रचित् विद्यालयाय् मान्यतां प्रददाति। अनेनाधारेण तस्य कृते अनुदानस्य राशिः निर्धारिता भवति।

4. शिक्षणे सिध्दता – प्रत्येकस्मिन परीक्षाणां कृते शिक्षकः परीक्षादृष्ट्या महत्त्वपूर्णतथ्यानां संकलनं करोति, परिणामस्वरूप शिक्षकस्य ज्ञाने वृध्दिः भवति । स्ववर्धितज्ञानस्याधारेण शिक्षकः सहजतया शिक्षणे उन्नतिं करोति ।

5. शिक्षकाणां विभागानां मूल्याङ्कनम् – परीक्षापरिणाधारेण एव शिक्षकाणां विद्यालयानां विविधविभागानाञ्च मूल्याङ्कनार्थमपि अस्य उपयोगः भवति। विभिन्नेषु विद्यालयेषु विभागेषु च अध्यापनस्य स्थितिः, प्रभावशीलता, कार्यक्षमता च विषये ज्ञानं भवितुम् अर्हति। एतेन तेषां तुलनात्मकाध्ययनमपि कर्तुं शक्यते ।

6. शैक्षिकनिर्देशने सहायकः - परीक्षा न केवलं बालस्य शैक्षिकमार्गदर्शने बहु सहायकः भवति। परीक्षा छात्राणां विषये अनेकोपयोगी सूचनाः प्रददाति। परिणामानां आधारेण छात्रस्य विषयसम्बद्धाः उपलब्धयः, क्षमताः, रुचिः, शैक्षिकमार्गदर्शनार्थं अत्यन्तं आवश्यकानां योग्यतानां ज्ञानं सहजतया प्राप्तुं शक्यते।

7. अन्वेषणार्थं आवश्यकम् – शिक्षायां शोधकार्यं कर्तुं आवश्यकसामग्री संग्रह्यते। बहवः अनेकपरीक्षापरिणामाः तथा च छात्राणां निष्पत्तयः विभिन्नप्रकारस्य शोधकार्य्येषु आधारभूततथ्यानां कार्यं कुर्वन्ति ।

**उपलब्धिपरीक्षणस्य प्रकाराः**

उपलब्धिपरीक्षणं यत् निर्देशने परामर्शे च दक्षतां च मापनार्थं निर्मीयते प्रकार द्वयं भवति ।

1. तानि परीक्षणानि यानि कस्यचित् व्यावसायिकदक्षतां मापनार्थं निर्मीयते । इमानि परीक्षणानि व्यवसायपरीक्षणानि इति भवन्ति ।

2. तानि उपलब्धिपरीक्षणानि यानि विद्यालयस्य पाठ्यक्रमे कस्यचित् एकस्य विषयस्य प्राप्तज्ञानस्य मापनार्थं निर्मीयते। व्यावसायिकपरीक्षायाः माध्यमेन इदं दृश्यते यत् एकलव्यक्तिः व्यावसायिकप्रशिक्षणस्य फ़लस्वरूपं कियत् कार्यक्षमता प्राप्ता, व्यापारसम्बद्धे कियत् अनुभवः अस्ति तथा च सः सम्प्रति व्यापाराय किं कर्तुं शक्नोति । यद्यपि द्वितीयप्रकारस्य परीक्षणं विद्यालये अध्यापन विषयस्य सम्बन्धे कथ्यते । यत् एकलविषये छात्रेण कियत् अधिगमः कृतः ।

**उपलब्धिपरीक्षणस्य निर्माणप्रक्रिया**

कस्यापि लक्ष्यस्य प्राप्त्यर्थं कोऽपि संस्था वा व्यक्तिः प्रत्येकस्मिन् स्तरे योजनां करोति । सर्वकारेण निर्मिताः पञ्चवर्षीययोजनाः अस्य महत्त्वपूर्णं उदाहरणं भवितुम् अर्हन्ति । तथैव छात्राणां मूल्याङ्कनार्थं परीक्षाः सज्जीकृताः भवन्ति, यस्य अन्तर्गतं प्रश्नेभ्यः विविधपक्षमापनार्थं समुचितं स्थानं दातुं योजना निर्मितं भवति शिक्षकाः स्ववर्गस्य छात्राणां शैक्षिकोपलब्धिमापनार्थं मूल्याङ्कनार्थं च समये समये अनेकप्रकारस्य परीक्षायाः उपयोगं कुर्वन्ति। परीक्षणनिर्माणस्य आधारेण तेषां द्वयोः भागयोः विभक्तुं शक्यते।

1. असत्यापितपरीक्षणम्
2. प्रमाणीकृतपरीक्षणम्

**निष्कर्षः -**

कस्यापि विषयस्याध्ययनेन प्राप्तज्ञानोपालब्धिः भवति। कस्यापि विषयस्याध्ययनेन परीक्षायां प्राप्ताङ्काः शैक्षिकोपलब्धिः भवति। स्वसफलतायाः शैक्षिकोपलब्धिना व्यक्तित्वस्य निर्माणं भवति। शैक्षिकोपलब्धिना छात्रेषु प्रतिभायाः निर्माणं भवति, येन छात्राः कठिन परिस्थितिषु अपि दुर्बलं न अनुभवन्ति। शैक्षिकोपलब्धेः छात्रणां विकासे अत्यन्तमहत्वपूर्णाभूमिका विद्यते।

**सन्दर्भग्रंथ सूची –**


1. गुप्त, डॉ. नत्थूलाल : मूल्य परक शिक्षा और समाज, नमन प्रकाशन, नई दिल्ली 2005
2. गुणात्मक अध्यापक शिक्षा का पाठ्यचर्या प्रारूप, राष्ट्रीय अध्यापक शिक्षा परिषद प्रकाशन, नई दिल्ली 1999
3. जयश्री, मूल्य पर्यावरण और मानवाधिकार की शिक्षा, क्षिप्रा, प्रकाशन, नई दिल्ली 2008
4. पाठक, आर.पी. भारतीय परम्परा में शैक्षिक चिंतन, कनिष्क प्रकाशन, दिल्ली 2011
5. पाण्डेय, डॉ कामता प्रसाद : शिक्षा दर्शन, विनोद पुस्तक मंदिर, आगरा, 1997-98
6. पाण्डेय, के. पी. शिक्षा के दार्शनिक एवं सामाजिक आधार, विश्वविद्यालय प्रकाशन, वाराणसी, 2005
7. दुवे, श्यामचरण, समय और संस्कृति, वाणी प्रकाशन,नई दिल्ली
8. मिश्र, प्रो. भास्कर, शिक्षा एवं संस्कृति नये संदर्भ, भावना प्रकाशन, नई दिल्ली, 1995
9. मुखर्जी, आर. मूल्यों का सामाजिक ढाँचा, चाँद प्राइवेट लिमिटेड कंपनी, नई दिल्ली 1969
10. सक्सेना, डॉ. सरोज, शिक्षा के दार्शनिक एवं समाजशास्त्रीय आधार, साहित्य प्रकाशन, आगरा, 2007


National Journal of
Hindi & Sanskrit Research

ISSN: 2454-9177
NJHSR 2024 1(52 ): 30-33

www.sanskritarticle.com

आरती
शोधच्छात्रा, फलितज्योतिषविभागः,
श्रीलालबहादुरशास्त्रीसंस्कृतकेन्द्रीय-
विश्वविद्यालयः नवदेहली

Correspondence:
आरती
शोधच्छात्रा, फलितज्योतिषविभागः,
श्रीलालबहादुरशास्त्रीसंस्कृतकेन्द्रीय-
विश्वविद्यालयः नवदेहली

# वास्तुसम्मतद्वारविन्यासः

आरती

**प्रस्तावना**

कस्यापि भवनस्य प्रवेशद्वारं तस्य मुखं भवति। यथा मानवस्य काये मुखस्य महत्वमस्ति तथैव भवने मुख्यद्वारस्य महत्वमस्ति। मुख्यद्वारस्य कृते दिशानिर्धारणं, तस्य विस्तारः, तस्य द्वारस्य शाखा, द्वारस्य चित्रलेख्यकर्मादीनां ज्ञानं वास्तुशास्त्रीयेषु ग्रन्थेषु विस्तरेण प्राप्यते।

**विषयोपस्थापनम्**

प्रथमतः भवनद्वारस्य दिशः निर्धारणं क्रियते। तदर्थं वास्तुशास्त्रीयेषु ग्रन्थेषु कश्चित् **'वत्समुखविचारः'** नामधेयो विधिः वर्णितः। एतदनुसारेण यदा सूर्यः कन्यातुलावृश्चिकादिषु राशिषु भवेच्चेत् वत्समुखं प्राच्यां, धनुमकरकुम्भे स्याच्चेत् वत्समुखं दक्षिणे, मिथुनकर्कसिंहराशिषु रविः भवति तदा वत्समुखं पश्चिमे, मिथुनकर्कसिंहराशिषु सूर्यस्य स्थित्यां वत्समुखम् उदीच्यां भवति। वत्समुखस्य सम्मुखं भवनद्वारस्य स्थित्यां हानिः, पृष्ठे भवेच्चेत् आयुक्षयो भवति।[1] गृहस्वामिनः राश्याधारेणापि भवनस्य मुखद्वारस्य दिशानिर्धारणं क्रियते। यथा- वृश्चिकमीन-सिंहराशिजनानां गृहस्य मुख्यद्वारं प्राच्यां दिशि, कन्या-कर्क-मकरराशिवतां गृहस्य प्रमुखद्वारं दक्षिणे, धनु-तुला-मिथुनराशिवतां गृहद्वारं पश्चिमस्यां दिशि, कुम्भमेषवृषराशिवतां गृहस्य द्वारम् उत्तरस्या दिशि स्याच्चेत् शुभकरो भवति।[2]

अपराजितपृच्छायामपि राशिवशात् भवनस्य प्रमुखं द्वारं निर्धायते।[3] आयानुसारमपि प्रमुखस्य द्वारस्य दिशः निर्धारणं भवति। यथा- यस्य गृहस्य ध्वजायः भवति तस्य मुख्यद्वारं कस्यामपि दिशि भवितुमर्हति। सिंहायवतः गृहस्य द्वारं पश्चिमां विहाय अन्येषु त्रिषु दिक्षु क्रियते चेत् शुभकरं भवति। यस्य गृहस्य गजायो भवति, तस्य द्वारं पूर्वदक्षिणयोः शुभं भवति। यस्य भवनस्य वृषायो वर्तते तस्य भवनस्य द्वारं प्राच्यां भवेच्चेत् शुभं भवति।[4] ब्राह्मणादि वर्णचतुष्टयाधारेणापि भवनस्य प्रमुखस्यद्वारस्य निर्धारणं भवति। तत्र ब्राह्मणानां कृते पश्चिमस्यां दिशि, क्षत्रियाणां कृते उत्तरस्यां दिशि, वैश्यानां कृते पूर्वदिशि, शूद्राणाञ्च कृते दक्षिणदिशि मुख्यद्वारं कल्याणकरं कथ्यते।[5] भवनस्य निर्माणं यस्मिन् मासे आरभ्यते तदुनसारमपि गृहस्य मुख्यद्वारस्य दिक् निर्धार्यते। यदि सूर्यः कर्क-मकरसिंहकुम्भराशिषु स्थितः स्यात् तदा भवनारम्भः क्रियते चेत् भवनस्य मुख्यद्वारं पूर्वे पश्चिमे वा कर्त्तव्यम्। तथा च मेषवृश्चिकवृषराशिगते सूर्ये यदि भवनारम्भः स्याच्चेत् द्वारस्य स्थितिः दक्षिणस्याम् उत्तरस्यां वा भवेत्।[6] एकं विधानम् एवमपि प्राप्यते यत् वास्तुरूपनागस्य मुखं यायां दिशि स्यात् तत्रैव द्वारनिर्माणं सौख्यदं भवति।[7]

भवनारम्भस्य तिथेः आधारेणापि भवनद्वारस्य दिक् निर्धार्यते। यदि पूर्णिमातः कृष्णाष्टमीं यावत् भवनारम्भः स्याच्चेत् भवनस्य द्वारं प्राच्यां न स्यात्। कृष्णपक्षस्य नवम्याः चतुर्दशीं यावदारब्धस्य भवनस्य द्वारम् उदीच्यां दिशि न करणीयम्। अमावस्यातः शुक्लाष्टमीं यावदारब्धस्य भवनस्य द्वारं पश्चिमस्यां दिशि न स्यात्।[8] शुक्लनवमीतः चतुर्दशीं यावत् आरब्धकार्यस्य भवनस्य मुख्यं द्वारं दक्षिणदिशि न स्यात्। नक्षत्रानुसारमपि द्वारस्य दिङ्निर्धारणं वास्तुशास्त्रीयेषु ग्रन्थेषु प्राप्यते। सो विधिः सप्तश्लाकाचक्रं भवति। तत्र चक्रं निर्माय तदाधारेण निर्धारणं क्रियते।चक्रेऽमुष्मिन् पूर्वापरा याम्योत्तरा च

सप्तरेखाः क्रियन्ते। तत्र प्राच्यां कृत्तिकारभ्य आश्लेषां यावत्, मघातः विशाखां यावत् सप्त दक्षिणे, अनुराधातः श्रवणं यावत् सप्तनक्षत्राणि पश्चिमे तथा च उत्तरस्यां दिशि धनिष्ठानक्षत्रादाराभ्य भरणीं यावत् सप्तनक्षत्राणि न्यस्यन्ते। सम्मुखस्थितेषु पृष्ठस्थितेषु च नक्षत्रेषु द्वारकरणं कष्टदम् अन्यत्र च शुभकरं भवति।[9]

सप्तशलाकाचक्रम्

पू.
कृ. रो. मृ. आ. पुर्न. पु. आ.
भ. म.
अ. पूफा.
रे. उफा.
उ. उभा. ह. द
पूभा. चि.
श. स्वा.
ध. विशा.
श्र. अभि. उषा. पूषा. मूला. ज्ये. अनु.
प.

एवमेव द्वारचक्रस्य माध्यमेनापि द्वारकरणस्य विधानं भवति। चक्रेऽस्मिन् सूर्यस्य नक्षत्रादाराभ्य चत्वारि नक्षत्राणि द्वारस्य उपरिभागे स्थाप्यन्ते। कोणयोः द्वे नक्षत्रे शाखयोश्च नक्षत्रद्वयं न्यस्येते। ऊर्ध्वेषु नक्षत्रेषु कृतं द्वारं राज्यं ददाति, कोणनक्षत्रेषु कृतं द्वारं उद्वासनं, शाखानक्षत्रेषु जातं द्वारं लक्ष्मीदं भवति, ध्वजायानक्षत्रेषु कृतं द्वारं मृत्युदं, मध्यनक्षत्रेषु कृतं द्वारं सौख्यप्रदं भवति।[10]

द्वारस्य दिशः निर्धारणं वास्तुपदविधिरिति विधिः वास्तुशास्त्रीयेषु ग्रन्थेषु प्राप्यते। चतुर्षष्टिवास्तुपदे पूर्वस्यां सूर्यस्य, ईश्वरस्य, पर्जन्यस्य च पदेषु दक्षिणस्यां यमस्य, वह्नेः, पौष्णः पदेषु, पश्चिमदिशि शेषासुरपापपदेषु, उत्तरस्यां दिशि रोग-नाग-शैलपदेषु च द्वारकरणस्य निषेधो कृतो वर्तते। क्रूराणां देवानां पदेष्वपि यदि द्वारं क्रियते चेत् तत् कष्टदं भवति।[11] एवमेव एकाशीतिवास्तुपदे द्वारकरणस्य दिशि दक्षिणे पञ्चभागान् वामे च पञ्चभागान् परित्यज्य मध्ये भागे द्वारकरणं शुभफलप्रदं भवति।[12]

भल्लाटादिषु पदेषु ब्राह्मणादिवर्णानामनुसारेणापि द्वारविधानं कथ्यते। यथा- ब्राह्मणानां कृते भल्लाट-धनद-चरक-पृथ्वीधरादिषु पदेषु द्वारनिर्माणं शुभं भवति, राजन्यानां कृते महेन्द्रार्कसत्यार्कपदेषु द्वारकरणं शुभं भवति, विशां कृते याम्य-विवस्वत-गान्धर्व-गृहक्षतादिषु पदेषु द्वारकरणं शुभकरं भवति, शूद्राणाञ्च कृते वारुण-पौष्पदन्त-मैत्रासुरपदेषु क्षरनिर्माणं शुभं भवति।[13] एवमेव वर्णनं प्राप्यते यत् प्राच्यदिशः तृतीये तुरीये च पदे, दक्षिणदिशः तुर्ये पदे, पश्चिमदिशःतृतीयचतुर्थपञ्चमपदेषु,सौम्यदिशः तृतीयचतुर्थपञ्चमपदेषु कृतं द्वारं धनप्रदायकं सन्ततिवृद्धिकारकञ्च भवति।[14]

द्वारकरणस्य विधिः वास्तुपदमाध्यमेन विश्वकर्माप्रकाशे[15], अपराजितपृच्छायां[16], बृहद्वास्तुमालायां[17] चेत्यादिषु ग्रन्थेषु विस्तरेण प्रतिपादितो वर्तते। आचार्यो वराहमिहिरोऽपि द्वारचक्राधारेण विभिन्नपदेषु कृतस्य द्वारस्य शुभाशुभफलं प्रतिपादयामास।[18]

पूर्व

पश्चिम

द्वारकरणस्य दिशः स्थानस्य च निर्धारणं कृत्वा तदनु द्वारनिर्माणस्य सिद्धान्ता उपस्थाप्यन्ते। द्वारस्य विस्तारात् तस्य दैर्घ्यं द्विगुणितं भवेत्। द्वारस्य प्रमाणविषये वर्णनं प्राप्यते यत् गृहस्य हस्तात्मकविस्तारम् अङ्गुलात्मकं मत्वा तत्र सप्ताङ्गुलं संयोज्यते। चेदेवम्प्रकारेण द्वारस्य दीर्घत्वं निर्धार्यते। यदि भवनस्य विस्तारः चतुर्विंशतिहस्तात्मको भवति चेत्तदा द्वारस्य दीर्घत्वम् एकत्रिंशत् अङ्गुलात्मकं (247-31) भवति।[19]

गृहस्य हस्तात्मकं विस्तारम् अङ्गुलात्मकं मत्वा तस्मिन् षट्संख्या संयोज्य द्वारस्य निर्धारणं कर्तव्यमित्यपि केषुचित् वास्तुग्रन्थेषु प्राप्यते। एतन्मानं मध्यमद्वारस्य भवति, एतस्माद् पञ्चदशाङ्गुलात्मकमधिकं कनिष्ठस्य द्वारस्य मानं कथ्यते, सप्ताङ्गुलात्मकमधिकं ज्येष्ठद्वारस्य मानं वर्तते।[20]

द्वारविषये कथ्यते यत् समायतद्वारं शुभकरं कथ्यते, विषमायतद्वारञ्चाशुभं भवति। द्वारस्य भुजयोः कोणयोश्च परस्परं तुल्यत्वं भवेत्। दक्षिणपश्चिमे कृतं कपाटं खुरकरं कथ्यते।[21]

वास्तुशास्त्रस्य ग्रन्थेषु नृपाणां, सामान्तानां, दूतानां, ब्राह्मणानां, क्षत्रियाणां, वैश्याणां, शूद्राणाञ्च कृतेऽपि द्वारमानस्य भेदस्य वर्णनं प्राप्यते।[22] वास्तुरत्नाकरे[23] वास्तुसारसंग्रहे[24] अन्येषु च वास्तुग्रन्थेषु द्वारस्य मानविषयिणी चर्चा विस्तरशः प्राप्यते। द्वारस्य प्रमाणे यदि न्यूनत्वं भवेच्चेत् दुःखं भवति, मानाधिक्ये तु राज्ञो भवं भवतीति कथ्यते। इत्यनेन ज्ञायते यत् द्वारमानस्य विशिष्टत्वं कियद्वर्तते।[25]

साम्प्रतं द्वारस्य गुणाः दोषाश्च विविच्यन्ते। कीदृशं द्वारं शुभकरं स्वद्रव्यैः युक्तं भवनद्वारं शुभकरं कथ्यते। यद्द्वार अत्युच्यं भवति तत् राज्ञो भयदं भवति, अतिनीचश्च यद्द्वारं तत् चौर्यकारकं भवति। कुब्जं द्वारं कुलानां कृते पीडाकरं कथ्यते।[26] एवमेवप्रकारेण सम्प्रति केचन द्वारस्य दोषाः कथ्यन्ते यत् यदि द्वारं स्वयमेवोद्घटितं भवेत् चेत्तद् गृहवास्तव्यानां कृते उन्मादकारी भवति, स्वयमेव पिहितो भवेच्चेत् तद्द्वारं कुलविनाशी, मानस्य दीर्घतावशात् नृपभयं भवति, यदि दिग्भ्रमद्वारं स्याच्चेत् गृहस्वामी दस्युभिः पीडां प्राप्नोति।[27]

द्वारस्य गुणदोषयोः विषये विस्तरेण चर्चा अनेकेषु वास्तुशास्त्रीयग्रन्थेषु प्राप्यते। तद्यथा- राजवल्लभवास्तुशास्त्रे[28], बृहद्वास्तुमालायां[29],वास्तुसारसंग्रहे[30], वास्तुसौख्ये[31], वास्तुरत्नाकरे[32] च द्रष्टुं शक्यते।

वास्तुशास्त्रस्य ग्रन्थेषु द्वारवेधस्य वर्णनमपि विस्तरशः वर्णितमस्ति। अनेन प्रकाशस्य पवनस्य च मार्गे अवरोधार्थो गम्यते। यदि सूर्यकिरणानां वायोश्च सञ्चारे यदि अवरोधो भवति चेत् सः दोषाय भवति। यदि वृक्षकूपदेवानां सह द्वारस्य वेधः स्याच्चेत् सः वेधः कष्टदो भवति। तस्य वेधदोषस्य नाशाय द्वारवेधकपदार्थयोरन्तरं द्वारस्य अधिकं दैर्घ्यं भवेत्। यदि वृक्षेण, कोणेन, स्तम्भेन, मन्दिरेण, कीलकेन च सह द्वारेवधो भवति चेत् सः कष्टकारको भवति।[33] एवम् अनेकेषु वास्तुग्रन्थेषु द्वारवेधस्य शुभाशुभफलकथनं विहितमस्ति।[34]

एवमेव बृहत्संहितायां[35] विश्वकर्माप्रकाशे[36] अन्येषु च वास्तुशास्त्रीयेषु ग्रन्थेषु द्वारस्य वेधविचारः सम्प्राप्यते। प्रथमतया दिशां निर्धारितं कृत्वा तदनु द्वारनिर्माणं कृत्वा मुहूर्तदृष्ट्या शुभसमये द्वारस्य स्थापना क्रियते इति वास्तुशास्त्रीयो सिद्धान्तो वर्तते। शुभनक्षत्रेषु शुभतिथिषु च द्वारस्य स्थापना क्रियते। अश्वनी-उत्तरात्रय-स्वाति-रोहिण्यादिषु शुभनक्षत्रेषु गृहस्य मुख्यद्वारस्य स्थापना कर्त्तव्या तथा च तिथिषु पञ्चमी-सप्तमी-अष्टमी-नवम्यादयः तिथयः द्वारस्य स्थापनाय शुभाः प्रोक्ताः।[37] द्वारस्य स्थापनार्थं मुहूर्तग्रन्थेषु द्वारस्य क्रममपि वर्णितं वर्तते। सूर्यभाद् यदि वर्तमाननक्षत्रं यावत् गणना क्रियते चेत् शिरसि स्थितानि चत्वारि नक्षत्राणि कीर्तिप्रदायकानि, कोणेषु स्थितानि अष्टौ नक्षत्राण्युद्वेगकारकाणि भवन्ति, शाखायां स्थितान्यष्टौ नक्षत्राणि सौख्यप्रदानि, देहलीस्थानि त्रिनक्षत्राणि मृत्युप्रदानि, मध्यस्थानि चत्वारि नक्षत्राणि सौख्यदायकानि भवन्ति।[38]

द्वारस्य शाखास्थापनस्य मुहूर्तमपि वर्णितं वर्तते यत् द्वारशाखायाः स्थापना शुभेषु वारेषु क्रियते। कृत्तिकादिषु अग्नितत्त्वनक्षत्रेषु, त्रिपुष्करे, पञ्चकनक्षत्रेषु, सोमवासरे च द्वारस्य स्थापना न करणीया इति विधानमस्ति।[39]

द्वारकरणचक्रनाम्ना चक्रमेकं वास्तुशास्त्रस्य केषुचित् ग्रन्थेषु प्राप्यते। तदनुसारं सूर्यभाद्यदि वर्तमानस्थं नक्षत्रं यावत् गणना क्रियते भवतीत्यत्र कथ्यते यत्- सुव्यवस्थितं, सुन्दरं, चतुरस्रं, कान्तं, ऋजुः, चेत् नक्षत्रचतुष्ट्यं धनदायकं, तदनु द्वे नक्षत्रे हनिकरे, तदनन्तरं नक्षत्रचतुष्टयं धनदायकम्, अनन्तरं द्वे नक्षत्रे भयकरे, तदनुचत्वारि नक्षत्राणि मृत्युप्रदायकानि, तदनु द्वे नक्षत्रे मृत्युकारिणे, अनन्तरञ्चत्वारि नक्षत्राणि धनदायकानि, द्वे नक्षत्रे शोकदायके, नक्षत्रत्रयलाभकराणि च भवन्ति।[40] द्वारकरणमुहूर्तम् एतेन चक्रेणापि ज्ञातुं शक्यते-

**द्वारकरणमुहूर्तचक्रम्**

| | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|
| **नक्षत्र संख्या** | ४ | २ | ४ | २ | ४ | २ | ४ | २ | ३ |
| **फलम्** | राज्य लाभः | हानि | धन प्राप्तिः | भयः | मृत्युः भय | मृत्युः | द्रव्य प्राप्तिः | शोकः | धन लाभः |

एवं सम्यक्तया मुहूर्तादीन् विचार्य द्वारस्य स्थापना कर्त्तव्या। सर्वविधेषु वास्तुग्रन्थेषु एकमतेन एतेषां समेषां सिद्धान्तानाम् अनुपालनं परमावश्यकं भवति, किन्तु देवालयस्य द्वारकरणे कानिचन विशिष्टाः सिद्धान्ता अपि वर्णिताः सन्ति। तदनुसारं सर्वदैव देवालयस्य द्वारं पूर्वाभिमुखं भवेत् किन्तु ब्रह्मशिवजैनानाम् मन्दिरेषु चतुष्वपि दिक्षु द्वाराणि शुभानि भवन्ति।[41]

एवमेव गृहविषये मध्यमद्वारं निषेधितमस्ति। गृहस्य कस्मिन्नपि दिशि मध्यमद्वारं कष्टकरं कथितम्। देवालयेषु मध्यमद्वारं शुभं कथ्यते।[42]

इतः परं ग्रन्थकारेण विविधानां प्रासादानां द्वारस्य मानं निर्दिष्टं वर्तते। नागरप्रासादद्वारस्य मानसन्दर्भे इदं ध्येयं भवति यदस्याः जातेः प्रासादेः एकहस्तविस्तारवतः प्रासादस्योदयः षोडशाङ्गुल-परिमितः स्यात्। इतः परं चतुर्हस्तं यावत् 16-16 अङ्गुलात्मिका वृद्धिः स्यात्-

**एकहस्ते तु प्रासादे द्वारं स्यात् षोडशाङ्गुलम्।**
**षोडशाङ्गुलिका वृद्धिर्यावद्धहस्तचतुष्टयम्।।**[43]

एवमेव पञ्चहस्तात् अष्टौ यावत् 3-3 अङ्गुल्यात्मिका वृद्धिः एवं नवहस्तात् पञ्चाशद्धस्तपरिमितं यावत् 2-2 अङ्गुल्यात्मिका वृद्धिः द्वारस्योदयाय निर्धारिता वर्तते। एवमेव पञ्चाशद्धस्तस्य मन्दिरस्य द्वारस्योदयं 160 अङ्गुलिपरिमितो भवति।[44]

इतः परं ग्रन्थकारेण भूमिजादिप्रासादद्वारमानस्यापि चर्चा विहिता वर्तते। ग्रन्थकारमते भूमिजप्रासादस्य द्वारमानं यदि एकहस्तविस्तारात्मकं स्यात्तदा प्रासादस्य द्वारस्योदयः द्वादशाङ्गुलपरिमितः स्यात्। इतः परं पञ्चहस्तविस्तारं यावत् प्रतिहस्तं 12-12 अङ्गुल्यात्मिका वृद्धिः स्यात्।

**एकहस्ते सुरागारे द्वारं सूर्याङ्गुलोदयम्।**
**सुर्याङ्गुला प्रतीकरं वृद्धिः पञ्चकरावधिः।।**[45]

पञ्चहस्तानन्तरं प्रासादस्य विस्तारः षड्हस्तपरिमितः सप्तहस्तपरिमितः स्यात्तदा तस्मिन् 5-5 अङ्गुल्यात्मिकां वृद्धिं, अष्टहस्तात् नवहस्तपरिमितस्य प्रासादाय 4-4 अङ्गुल्यात्मिकां वृद्धिंदशहस्तात् पञ्चाशत्हस्तपरिमितस्य प्रासादस्य 2-2 अङ्गुल्यात्मिकां वृद्धिं कल्पयेत् अनेनैव प्रकारेण द्वारस्य निर्माणमपि कुर्यात्।[46]

इतः परं ग्रन्थकृता द्राविडद्वारस्य मानमपि प्रकृतस्थले निर्दिष्टमस्ति। ग्रन्थकारमते द्राविडद्वारस्योदयः एकहस्तप्रसृतस्य प्रासादस्य दशाङ्गुलात्मको भवति। इतः परं षड्हस्तप्रसृतस्य प्रासादस्य कृते प्रतिहस्तं यथाक्रमं 10-10 अङ्गुलात्मको विस्तारः अपेक्ष्यते-

**प्रासादे एकहस्ते तु द्वारं कुर्याद्दशाङ्गुलम्।**
**रसहस्तान्तकं यावत्तावता वृद्धिरिष्यते।।**[47]

**उपसंहृतिः**

वास्तुशास्त्रविदां मते गृहस्वामिनः राश्यनुरूपं द्वारस्य विधानं कीर्तितं वर्तते। यदि वृश्चिकमीनसिंहराशिषु जातो जातकः स्यात्तदा द्वारं पूर्व दिशि, यदि वृश्चिकमीनसिंहराशिषु जातो जातकः स्यात्तदा द्वारं पूर्व दिशि, यदि निमार्तुः जनिः कन्याकर्कमकरराशिषु वर्तते चेत् दक्षिणस्यां दिशि, धनुतुलामिथुनराशिषु लब्धजन्मनः पश्चिमस्यां दिशि, कुम्भमेषवृषेषु धृतदेहस्योत्तरस्यां दिशि द्वारं शुभकरं भवतीति समीक्षणेन मयावाप्तम्।इत्येवम्प्रकारेण विविधविधद्वाराणां चर्चात्र वास्तुशास्त्रीयग्रन्थेषु द्रष्टुं शक्यते।

**संदर्भ ग्रंथः -**


1 रा.व.वा.शा..1/9
2 तत्रैव.1/12
3 अ.पृ.101/12.13
4 वा.रत्ना.8/6
5 तत्रैव 8/7
6 तत्रैव.8/8.9
7 तत्रैव.8/12.13
8 तत्रैव.8/16
9 वा.सा.सं..16/8
10 वि.प्र..7/29.32
11 रा.व.वा.शा..5/27
12 वा.सौ..1/323
13 स.सू..35/2.7
14 वा.सा.सं..16/53.54
15 वि.प्र..7/58.61
16 अ.पृ..101/2.11
17 बृ.वा.मा..4/163.166
18 बृ.सं..53/71.75
19 स.सू..32/2
20 रा.व.वा.शा..5/13
21 वा.सौ..9/330
22 बृ.वा.मा..4/176.182
23 वा.र..8/40/44
24 वा.सा.सं..16/35.36
25 वि.प्र..7/94
26 सं.सू..35/36, 52
27 बृ.सं..53/79.81
28 रा.व.वा.शा..5/30
29 बृ.वा.मा..4/156.158
30 वा.सा.सं.. 17/17.19
31 वा.सौ..9/364.366
32 बा.र..8/60.64
33 रा.व.वा.शा..5/28
34 स.सू..35/52.56
35 बृहत्संहिता 53/77.78
36 वि.प्र..7/89.90
37 बृहदावास्तुमाला4/168.170
38 मुहूर्त्तचिन्तामणि12/29
39 वि.प्र.7/36
40 वा.सा.सं..16/20
41 राजवल्लभवास्तुशास्त्रम्9/39
42 वास्तुसौख्यम् 9/324
43 प्रासादमण्डन3/43
44 तत्रैव3/44
45 तत्रैव3/46
46 तत्रैव3/47
47 प्रा. म. 3/48



National Journal of Hindi & Sanskrit Research

**ISSN: 2454-9177**
NJHSR 2024; 1(52): 34-36

www.sanskritarticle.com

**Ruby Bachhety**
P.hd In Puran,
Shri Lal Bahadur Shastri Rashtriya-Sanskrit Vidyapeeth, Katwariya Sarai, New Delhi

**Correspondence:**
**Ruby Bachhety**
P.hd In Puran,
Shri Lal Bahadur Shastri Rashtriya-Sanskrit Vidyapeeth, Katwariya Sarai, New Delhi

# स्कन्दपुराणस्य मानसखण्डस्य नन्दादेवीतीर्थस्य विवेचनम्

**Ruby Bachhety**

**पुराणानां महत्त्वम् -** भारतीयसंस्कृतेः सभ्यतायाः च अवबोधनाय पुराणानां नितरां महत्त्वमस्ति। पुराणविषयो यो निर्देशितः स केवलं आदिमपुराणसम्बन्धको ज्ञेयः, यदा धर्मसिद्धान्ताः तीर्थमाहात्म्यानि धर्माङ्गान्तराणि चेति बहुविधं अर्थजातं न खलु पुराण- निक्षिप्तमभूत्। इदानीं तु पुराणेषु उपदेशप्रकरणानि सङ्ख्यया इतिहासप्रकरणानि अपि वर्तमानानि पश्यामः। तत्र च अनैतिहासिक्यः कथाः, विष्णुदशावतारवर्णनानि, देवपूजाविधयः, पर्व-व्रतनियमाश्चेति नाना-विषयाः उपलभ्यन्ते। वेदप्रामाण्येन पुराणप्रामाण्यं खलु प्रख्यायते। वायुपुराणे च वेदपुराणत्वमात्मन उद्दिष्टम्। पुराणसंख्या-विषये मतभेदो नास्ति, सर्ववादिसिद्धं तेषां अष्टादशत्वम्। कस्यापि मानवसमाजस्य इतिहासः तावन्न पूर्णो मन्यते, यावत्तस्य सृष्टेः प्रारम्भकालत इतिहासो न प्रस्तूयते। पाश्चात्त्यशिक्षाप्रभाविता विद्वांसो नैतदनुमोदयन्ति स्म, अत एव ते पुराणानि सत्यानि न स्वीकुर्वन्ति स्म, परं सम्प्रति दृष्टिकोणपरिवर्तनं जातम्। सुसंस्कृतया दृष्ट्या भारतीयमितिहासं जिज्ञासमानानां कृते पुराणानि निधय इव।

बहुषु पुराणेषु वेदसंहितानाम्ना तेषां व्यवहारो दृश्यते, वेदाध्ययनेन च यत् फलं तदेव, तद् अतिशयानं वा, फलं पुराणाध्ययनेन निगदितम्। चतुर्वेदज्ञाने सति पुराणज्ञानहीनः न श्रेष्ठः। उक्तं च वायुपुराणे-

**यो विद्याच्चतुरो वेदान् साङ्गोपनिषदो द्विजः।**
**न चेत् पुराणं स विद्यात् नैव स स्याद् विचक्षणः।।**[1]

धर्मार्थकाममोक्षात्मकचतुर्वर्गसाधनाद् वेदत्वं प्रतिपाद्यते। पुराणं पञ्चमो वेद इति आद्रियते। उक्तं च श्रीमद्भागवतपुराणे- **इतिहासपुराणं च पञ्चमो वेद उच्यते।**[2]

संस्कृतसाहित्ये पुराणानामतीवं गौरवास्पदं स्थानं विद्यते। धार्मिकदृष्ट्या एषां महत्त्वमधिकमस्ति। सर्वजनहिताय सर्वजनबोधाय च प्रसादगुणोपेतायाः पद्धत्या समाश्रयेण पुराणानां महत्त्वं प्रतिपदम् आलक्ष्यते। वेदतत्त्वार्थजातं सारल्येन अवगमयितुमेव एतेषां प्रवृत्तिः। वेदविहितानां धर्माणां सरलसुबोधभाषायां वर्णनायैव पुराणानि विरचितानि। भारतीयसाहित्यस्य गौरवं खलु महाभारतम्। वेदेषु यानि तत्त्वानि यत्र तत्र वर्ण्यन्ते तेषां विशदीकरणं पुराणेषु आख्यानरूपेण प्राप्यते। यथोक्तं महाभारते -

**इतिहासपुराणाभ्यां वेदं समुपबृंहयेत्।**
**विभेत्यल्पश्रुताद्वेदो मामयं प्रहरिष्यति।।**[3]

**पुराणेषु प्रतिपाद्या विषयाः -**पुराणेषु मुख्यतः निम्नाङ्ङ्कितानां तथ्यानां वर्णनं प्राप्यते। (क) त्रिदेवेषु कस्यापि एकस्य इष्टदेवत्वेन वर्णनम्। (ख) सृष्ट्युत्पत्तिः अवस्थायां प्रलयस्य च वर्णनम्। (ग) देवानां ऋषीणां च वंशावलेः, तज्जीवनवृत्तस्य च वर्णनम्। (घ) देवस्य देव्या वा उपासनायाः सर्वोत्कृष्टतायाः च वर्णनम्। (ङ) मनोः मन्वन्तरस्य च वर्णनम्। (च) **भौगोलिकस्थानानां तीर्थानां तीर्थयात्रादीनां च वर्णनम्।** (छ) जप-व्रत-उपवास-प्रार्थनादीनां सानुष्ठानं वर्णनम्। (ज) अवतारवादस्य वर्णनम्। (झ)

सगुणोपासनाया भक्तिमार्गस्य च वर्णनम्। (ञ) दार्शनिक-राजनीतिक-धार्मिक-आचारशास्त्रादिविषयाणां वर्णनम्। (ट)व्याकरण-काव्यशास्त्र-ज्योतिष-शरीरविज्ञान-आयुर्वेदादि-शास्त्रीयाणां वैज्ञानिकानां च विषयाणां तथ्यप्रकाशनम्।

स्कन्दपुराणस्य मानसखण्डस्य द्वाविंशतितमेऽध्याये नन्दादेवी-तीर्थवर्णनं समुपलभ्यते। जिज्ञासमाना ऋषयः व्यासमभिलक्ष्य कथयन्ति यत् वयं मानसतीर्थमाहात्म्यं श्रोतुमिच्छामः। ऋषीणां सद्वचनं संश्रुत्य व्यासः कथयति- नन्दपर्वतमारभ्य काकगिरिं यावत् मानसखण्डः ख्यायते। अस्य मानसखण्डस्य दक्षिणभागे नन्दगिरिः नामकः विराजते, तत्रैव नन्दादेवी राराजते। नन्दादेवीविषये व्यासः निगदति इयं नन्दादेवी नन्दगोपगृहे अवतीर्य कंसेन पुण्यशिलापृष्ठे पोथिता। पुनश्चेयमाकाशमार्गेण पुण्यं नन्दपर्वतं जगाम। ततः आरभ्य नन्दादेवीरूपेण प्रपूजिता भवति। नन्दादेवीतीर्थविषये भगवान् व्यासः कथयति-

**नन्दां सम्पूज्य मनुजाः पातकान् वितरन्ति हि।**
**नन्दाक्षेत्रसमं क्षेत्रं न पष्यामि द्विजोत्तमाः।।**[4]

अर्थात् ये मनुजाः नन्दादेवीं पूजयन्ति ते सकलान् पातकान् वितरन्ति, नन्दादेवीतीर्थसमं अन्यतीर्थक्षेत्राणि न सन्तीति मे मतिः। अश्वमेधयज्ञस्य यत्फलं लभते तत्फलं नन्दादेवीतीर्थदर्शनादेव भवति-

**अष्वमेधस्य यज्ञस्य फलं भवति दर्षनात्।**
**तस्माम् कोऽन्यतमो विप्राः क्षेत्रोऽस्ति भुवमण्डले।।**[5]

नन्दादेवीतीर्थे एव मेनका नाम ब्राह्मणी पुंश्चलीं भूत्वापि योगमायां सम्पूज्य स्वर्गं प्रति गता। मेनकायाः वृत्तान्तं श्रुत्वा ऋषयः कथयन्ति- सा ब्राह्मणी कथं पुंश्चली धर्ममास्थिता? सा कथं ज्ञातवती नन्दादेवीम्? सा कया पद्धत्या नन्दां पूजयामास? व्यासः कथयति- प्राचीनस्य कृतयुगस्यादौ पुलस्त्यस्य कुलोद्भवा ब्राह्मणी मेनका नामतः प्रसिद्धाऽभूत्। सा भुवि सुरूपा सुविशालाक्षी चासीत्। पिता तां सुविशालाक्षीं दृष्ट्वा तस्याः विवाहः अत्रिगोत्राद्भवेन सुयोग्य-सन्तनाख्यया सह कृतवान्। सुव्रतः सन्तनोऽपि प्रियया सह सुचिरं कालपर्यन्तं रेमे। एकदा दैवयोगेन निमज्जन्तं सन्तनद्विजं मकरः गृहीत्वा जलमध्ये प्रवेशं कृतवान्। सरय्वां निपतितं पतिं दृष्ट्वा मेनकाऽपि सन्तनेन सह गन्तुमिच्छति, परन्तु समीपस्थाः जनाः एतत्कर्तुं निषेधं कुर्वन्ति। वैधव्यं प्राप्य दैवयोगेन मेनका दशमे मासि देवसुतोपमं पुत्रं प्रसूतवती। एकदा मेनकायाः गृहे एकः वनेचरः समागत्य आतिथ्यं च स्वीकृतवान्, ततोऽर्धरात्रौ स वनेचरः तां सुप्तां पर्यङ्गस्थितां मेनकां देवर्षिगन्धर्वसेविते सुमनोहरे शुभे हिमालयतटे नीत्वा सुचिरकालपर्यन्तं रमणं कृतवान्। स वनेचरः प्रतिदिनं नन्दपर्वतवासिनीं नन्दां पूजयति, तुष्टा जगद्धात्री तस्मै स्वर्णभारं प्रयच्छति च। मेनका प्रतिदिनं एतत्सर्वमवलोक्य तं वनेचरं पृच्छति- त्वया गन्धपुष्पादिकं नीत्वा कुत्र गम्यते? पूर्णस्वर्णमयं भारं कस्माद् आनीयते? मेनकायाः वचनं श्रुत्वा वनेचरः कथयति- इतो यो नन्दगिरिः दृश्यते, तत्र नन्दा महादेवी वसति, अहं प्रतिदिनं पर्वतवासिनीं नन्दां विविधैः गन्धपुष्पाक्षतैः शुद्धवस्त्रैश्च पूजयामि, पर्वतवासिनी प्रसन्नं भूत्वा प्रतिदिनं स्वर्णभारं प्रददाति-

**गन्धपुष्पाक्षतैः शुद्धैर्वस्त्रैश्च विविधैरपि।**
**संप्रसन्ना महाभागा स्वर्णभारं दिने दिने।।**[6]

वनेचरस्य वचनं संश्रुत्य पुनः मेनका पृच्छति- सा केन विधिना पूज्यते? प्रसन्नं भूत्वा कथं सा मनुष्याणां वरं प्रयच्छति? चारुभाषिणीमेनकायाः प्रश्नं श्रुत्वा वनेचरः वदति- योऽसौ नन्दपर्वतः मया ख्यातः, तत्रैव शिखरयोर्मध्ये पुण्यः नन्दसरः विद्यते। तस्मिन् सरे निमज्य विधिपूर्वकं नन्दिकेशमहादेवं सम्पूज्य शिखरस्थां नन्दादेवीं पूजयित्वा नन्दगिरिवासिनी प्रसन्नं भूत्वा ऐहिकामुष्मिकं फलं प्रयच्छति। व्यासः कथयति मेनका नन्दाप्रभावं ज्ञात्वा पापनिवारणाय प्रतिदिनं नन्दासरे स्नात्वा महेश्वरं सम्पूज्य नन्दां प्रार्थयति यत् हे देवी! मे पातकान् विनाशय। एवं कालक्रमेण सा दिवं गता। पापकारणात् यमदूताः तां यमराजपुरं नीतवन्तः। एवं विज्ञाप्य नन्दिका नन्दपर्वतवासिनीं कालीं यमरातसदनं प्रति प्रेषयति। नन्दावचनं संश्रुत्य महाकाली यमसदनं गत्वा मेनकामुक्तिहेतवे यमं विज्ञापयामास। कालीदेवी वदति- त्वद्गणाः नन्दासेविकां मेनकां कथमानीता? काली वचनं श्रुत्वा यमः कथयति-पतिव्रतानां नारीणां वासः देवमण्डले पुंश्चलीनां च वासः यमसदने विद्यते। कारणमस्ति यत् तीर्थशतैर्वापि यज्ञशतैरपि कायक्लेषादिकैर्वापि पतिभ्रष्टानारी नैव शुध्यति-

**नन्दासरस्य माहात्म्यं त्वया न ज्ञायते यम।**
**तथैव पर्वते पुण्ये देवीपूजनजं फलम्।।**[7]
**किं न ज्ञातं त्वयां पुण्यं देवीपूजनजं फलम्।**
**ब्रह्महत्यादिभिः पापैर्मुच्यते यत्र वै जनः।।**[8]

यमस्य वचनं श्रुत्वा काली कथयति- त्वया नन्दासरस्य नन्दादेवीपूजनस्य च माहात्म्यं न ज्ञायते। अत्र साक्षात्भगवान् विष्णुः पर्वतरूपेण विराजते। नन्दादेवीपूजनेन ब्रह्महत्यादिभिः पापैः प्रमुच्यते, परन्तु त्वं कथं नन्दापर्वतस्य माहात्म्यं न जानासि? इत्युक्त्वा तदा काली तां लोहपाशैर्निबद्धां मेनकां विमुच्य नन्दापर्वतमानीता। काल्या करग्रहणमात्रेण मेनका दिव्यरूपधरा साक्षात् विष्णोः श्रीरिव भासिता। ततः त्रिशूलधारिणी कालिका मेनकां नन्दामहेश्वरपर्वते आनीता। पुनश्च नन्दगिरिवासिनी तां मेनकां स्वर्गगतिं प्रदत्तवती। व्यासस्य कथनमस्ति यत् अद्यापि सा मेनका नायिकागणैर्सेविता स्वर्गमण्डले दृश्यते। नन्दागिरिवासिनीप्रभावात् वनेचरोऽपि सम्पूर्णं ऐश्वर्यं भुक्त्वा महामायाप्रसादतः शिवपुरं गतवान्।

अत्र कृष्णद्वैपायनस्य वचनमस्ति यत् नन्दादेवीतीर्थस्य माहात्म्यं ब्रह्महत्यादिभिपापैर्विमुच्यते। नन्दादेवीतीर्थस्य माहात्म्यं आयुरा-रोग्यमैश्वर्यं सुखसम्पद्प्रदायकं च वर्तते-

**इत्येतत्कथितं विप्रा नन्दाख्यानं सुविस्तरम्।**

**आयुरारोग्यमैश्वर्यं सुखसम्पद्विवर्धनम्।।**[9]
**य इदं परमं पुण्यं नन्दामाहात्म्यमुत्तमम्।**
**शृणुयाद् वा पठेद्वापि भुक्तिं मुक्तिं च विन्दति।।**[10]

वस्तुतः यदा वयं धर्मप्राणभूतस्य भारतवर्षस्य चर्चां कुर्मः तदा देवतीर्थानि मन्दिराणि वा सपदि विदुषां सम्मुखे आयाति। तस्य कारणमस्ति यत् भारतीयवाङ्मये तीर्थस्थलं पवित्रं मन्यन्ते। यत्र गत्वा मानवस्य सकलाः मनोरथाः पूरिताः भवन्ति, परन्तु तीर्थस्थल-गमनात्पूर्वं शारीरिकशुद्धता आवश्यकी भवति। शिवमहापुराणस्य विद्येश्वरसंहितायाः द्वादशतमेऽध्याये सूतः कथयति- तीर्थक्षेत्रे किं कार्यं किमकार्यमिति

**तीर्थे क्षेत्रे सदा कार्यं स्नानदानजपादिकम्।**
**अन्यथा रोगदारिद्रयमूकत्वाद्याप्नुयान्नरः।।**[11]

अत्र पौराणिकसूतस्य कथनमस्ति यत् यदि कोऽपि मानवः तीर्थक्षेत्रे गच्छति, चेत्तर्हि तस्मिन् तीर्थस्थले स्नानं दानं जपादिकं च कर्तव्यमिति। यदि मानवः पूर्वोक्तानि कार्याणि न करोति चेत्तदा सः रोगदारिद्र्यादिकमाप्नोति। अस्मिन् भारते वर्षे यो नरः स्वयम्भूतीर्थवासं विधाय मृत्युं गच्छति, सः पुनः मानुष्यमवाप्नोति। पुराणमीमांसकः सूतः तीर्थस्थले पापकार्याणि निषिद्धानि स्वीकरोति, यतोहि पुण्यक्षेत्रे कृतानि पापकार्याणि सुदृढानि भवन्ति। अतः पुण्यतीर्थस्थले किंचिदपि पापकार्याणि न भवेदिति धिया सदैव पुण्यतीर्थस्थले वासः विधेयः-

**येन केनाप्युपायेन पुण्यक्षेत्रे वसेन्नरः।**
**सिन्धोः शतनदीतीरे सन्ति क्षेत्राण्यनेकशः।।**[12]

**निष्कर्षः-**भारतवर्षस्य पवित्रभूधरायां नैकानि तीर्थस्थलानि विद्यन्ते। भारतदेशस्थितेषु देवतीर्थस्थलेषु सर्वाणि तीर्थस्थलानि प्रमुखानि सन्ति। मानवः प्रतिदिनं यानि कार्यानि करोति तत्सर्वम् आनन्दाय करोति अथवा सर्वेषां कार्याणां लक्ष्यमानन्दमेव भवति। यदा मानवजीवने आनन्दस्यागमनं भवति, तदा तस्य हृदयस्याज्ञानं दूरं भवति। यथा वयं ज्ञान-विज्ञानपदार्थविषये चिन्तयामः तदा एतेषां विपर्ययभूताज्ञानस्यापि चर्चायाति, तथैव यदा वयं पुण्यविषये चिन्तयामश्चेत्तदा पापविषयोऽपि अस्माकं पुरतः सपदि आयाति। पुराणवाङ्मये पुण्यभूतानां तीर्थस्थलानां वर्णनं प्रतिपदमायाति। शिवपुराणस्य विद्येश्वरसंहितायां पौराणिकसूतः कथयति यत् कानिचन् तीर्थस्थलानि विद्यन्ते, यत्र देवाः ऋषयश्च वासं विधाय अनुग्रहीतवन्तः। महापुरुषाणां भगवत्सदृशानां महर्षिणां वा निवासेन तत्क्षेत्रं पवित्रं भवति-

**परिग्रहाद् ऋषीणां च देवानां च परिग्रहात्।**
**स्वयम्भूतान्यथान्यानि लोकरक्षार्थमेव हि।।**[13]

पौराणिकवाङ्मये सर्वप्रथमं मुकुटमणिभूतस्य हिमालयस्य तीर्थक्षेत्राणि समायान्ति, यतोहि हिमालयस्य पुण्यक्षेत्रे देवा-गन्धर्वादयश्च निवसन्ति। इत एव सिन्धु-सरस्वती-गङ्गादि नदीनां प्रवाहक्षेत्रं विद्यते-

**सरस्वती नदी पुण्या प्रोक्ता षष्टिमुखा तथा।**
**हिमवद्गिरिजा गङ्गा पुण्या शतमुखा नदी।।**[14]

हिमालयस्य पुण्यतमेषु तीर्थक्षेत्रेष्वेकं तीर्थं नन्दादेवीतीर्थं विद्यते। नन्दादेवीतीर्थस्य माहात्म्यं नैकेषु पवित्रतमतीर्थेष्वन्यतमं माहात्म्यं विद्यते।

**संदर्भ ग्रन्थः -**


[1] वायुपुराणम्

[2] भागवत्पुराणाम्

[3] महाभारतम्

[4] स्कन्दपुराणम् मानसखण्डः 22 अध्यायस्य 9मः श्लोकः

[5] स्कन्दपुराणम् मानसखण्डः 22 अध्यायस्य 10मः श्लोक

[6] स्कन्दपुराणस्य मानसखण्डस्य 22 तमस्याध्यायस्य 45तमः श्लोकः

[7] स्कन्दपुराणस्य मानसखण्डस्य नन्दामाहात्म्यम् 22 अध्यायस्य 68 तमः श्लोकः

[8] स्कन्दपुराणस्य मानसखण्डस्य नन्दामाहात्म्यम् 22 अध्यायस्य 69 तमः श्लोकः

[9] स्कन्दपुराणस्य मानसखण्डस्य नन्दामाहात्म्यम् 22 अध्यायस्यः श्लोक 78

[10] स्कन्दपुराणस्य मानसखण्डस्य नन्दामाहात्म्यम् 22 अध्यायःस्य श्लोकः 79

[11] श्रीशिवपुराणम् विद्येश्वरसहिताया-12तमस्य अध्यायस्य पंचमः श्लोकः

[12] श्रीशिवपुराणम् विद्येश्वरसहिताया-12तमस्य अध्यायस्य 8 श्लोकः

[13] श्रीशिवपुराणम् विद्येश्वरसहिताया-12तमस्य अध्यायस्य 4 श्लोकः

[14] श्रीशिवपुराणम् विद्येश्वरसहिताया-12तमस्य अध्यायस्य 9, 10



National Journal of
Hindi & Sanskrit Research

ISSN: 2454-9177
NJHSR 2024; 1(52): 37-41

www.sanskritarticle.com

**वसन्तशास्त्री रा. पुराणिकः**
शोधार्थी,
कर्नाटकसंस्कृतविश्वविद्यालयः,
चामराजपेटे, बेङ्गलूरु

**शोध निर्देशक**
**डॉ.एम् वि जयरेवण्णः**
विद्वान्,
कर्नाटकसंस्कृतविश्वविद्यालयः,
बेङ्गलूरु -१८

**Correspondence:**
**वसन्तशास्त्री रा. पुराणिकः**
शोधार्थी,
कर्नाटकसंस्कृतविश्वविद्यालयः
चामराजपेटे, बेङ्गलूरु

# शाक्तोपनिषदः- एकं सिंहावलोकनम्

**वसन्तशास्त्री रा. पुराणिकः , डॉ.एम् वि जयरेवण्णः**

**पीठिका**

उपनिषत्प्रतिपाद्यं तत्त्वं तावत् जगतीतले प्राचीनतममित्येव जेगीयते। उपनिषदः सर्वाश्चात्मस्वरूपनिरूपणेनैव सार्थक्यं मन्वते। उपनिषच्छब्देनेवायमर्थो देद्युत्यते। उपनिपूर्वस्य सदेर्धातोर्विशरणगत्यवसादनार्थस्य क्विप्रत्ययान्तं रूपमिदमुपनिषदिति योगार्थश्चावगम्यते। अज्ञानं हिनस्तीत्यर्थयोगेन वा जन्ममरणचक्र पालकग्रन्थिचयस्य शैथिल्यापादनार्थयोगेन वा साधकजनं ब्रह्मसमीपं गमयतीत्यर्थयोगेन उपनिषच्छब्दः अध्यात्मभावप्रेरकः साधको भवतीति जाज्ञायते।

प्राधान्येन श्रीशङ्करभगवत्पादानां भाष्येषु उपविंशति संख्याका उपनिषदः समुल्लिख्यन्ते। बह्वयश्चोपनिषदस्तावदनन्तरकालीना भवेयुरिति कल्पयितुं शक्यते। अत एव शतद्वयादधिका तासां संख्या संप्रति संदृश्यते। तासु मायाशक्तिमुद्दिश्य काश्चन ग्रन्थाः संगृह्यन्ते उपनिषत् समुत्र्ययग्रन्थेषु। लक्ष्मीसरस्वतीपार्वती-गायत्रीत्यादिशक्तिविषयकोपासनाविशिष्टाश्चोपनिषदस्तु पार्तीक्येनात्र समुपन्य-स्ताः सन्ति।

उपनिषत्प्रतिपाद्यं तत्त्वं तावत् जगतीतले प्राचीनतममित्येव जेगीयते। उपनिषदः सर्वाश्चात्मस्वरूपनिरूपणेनैव सार्थक्यं मन्वते। उपनिषच्छब्देनेवायमर्थो देद्युत्यते। उपनिपूर्वस्य सदेर्धातोर्विशरणगत्यवसादनार्थस्य क्विप्रत्ययान्तं रूपमिदमुपनिषदिति योगार्थश्चावगम्यते। अज्ञानं हिनस्तीत्यर्थयोगेन वा जन्ममरणचक्र पालकग्रन्थिचयस्य शैथिल्यापादनार्थयोगेन वा साधकजनं ब्रह्मसमीपं गमयतीत्यर्थयोगेन उपनिषच्छब्दः अध्यात्मभावप्रेरकः साधको भवतीति जाज्ञायते।

प्राधान्येन श्रीशङ्करभगवत्पादानां भाष्येषु उपविंशति संख्याका उपनिषदः समुल्लिख्यन्ते। बह्वयश्चोपनिषदस्तावदनन्तरकालीना भवेयुरिति कल्पयितुं शक्यते। अत एव शतद्वयादधिका तासां संख्या संप्रति संदृश्यते। तासु मायाशक्तिमुद्दिश्य काश्चन ग्रन्थाः संगृह्यन्ते उपनिषत् समुत्र्ययग्रन्थेषु। लक्ष्मी सरस्वतीपार्वती-गायत्रीत्यादिशक्तिविषयकोपासनाविशिष्टाश्चोपनिषदस्तु पाकियेनात्र समुपन्यस्ताः सन्ति। अध्यात्ममार्गे ये जिगमिषवः सन्ति तेषां कृते उपासनावैविध्यं तावदत्र प्रदर्शितं दृश्यते। जिज्ञासवः ग्रन्थस्यास्य साहाय्येन उपासनोत्कर्ष सिषाधयिषन्ति चेत् परिश्रमोऽयं सार्थको भवतीति भावयामः। संप्रति अखिलभारतीयविद्वत्परिषदो महासचिवानां डॉ. कामेश्वर उपाध्यायमहोदयानां तथैव अध्यक्षमहाशयानाम् अन्येषामपि सदस्यानां प्रोत्साहनेन अन्योऽयं प्रकाशनपथमानीयमानो दृश्यते इति प्रमोदास्पदं विषयः। तदर्द सर्वेभ्योऽपि भूयोभूयः धन्यवादान् समर्पयामि। भारतीय- संस्कृतेः संण्डमार्य संस्कृतस्यस्य च प्रचारार्थ अखिलभारतीयविद्वत्परिषदः पात्र पारेवाचमिति तु विदितवृत्तान्त एव। सर्वथा सर्वे सदस्याः पोषकाश्च अभिनन्दनीयाः सन्तीति शिवम्।

- **परमात्मात्रिगुणात्मक :-**

रजोजुषे जन्मनि सत्त्ववृत्तये स्थितौ प्रजानां प्रलये तमस्पृशे ।अजाय सर्गस्थिति-नाशहेतवे त्रयीमयाय त्रिगुणात्मने नमः।।

इति बाणकवेः कादम्बरीग्रन्थे यश्चाव्यक्तः परमात्मा श्रूयते तस्यैव व्यक्तस्वरूपाणि ब्रह्मविष्णुमहेश्वरा इति वेविद्यन्ते। तत्र जगज्जन्मस्थितिलयकारणत्वेनैव त्रयोऽपि श्रूयन्ते। ब्रह्मा तावत् सृष्टिकर्तृत्वावच्छिन्न

इति, विष्णुस्तावत् स्थितिकारक इति, महेश्वरस्तु जगदुपसंहारक इति स्मृतिषु पुराणेतिहासादिषु च प्रतिपाद्यते। निर्गुणश्च परमात्मा सगुणो वा त्रिगुणात्मको वा भवितुं तत्रस्थिता त्वनादिमाया एव निदानमिति तु सर्वत्र सिद्धान्तग्रन्थेषु जेगीयते। श्री शङ्करभगवत्पादा अपि सौन्दर्यलहर्यां प्रथमश्लोके एव मायाशक्तेः प्रभावं विना ब्रह्मविष्णुमहेश्वराः स्वीयं जगद्व्यापारं निर्वोढुं न पारयन्ती त्येवं सुसूचयिषन्ति तथाहि शिवः शक्त्यायुक्तो यदि भवति शक्तः प्रभवितुं न चेदेवं देवो न खलु कुशलः स्पन्दितुमपि। अतस्त्वामाराध्यां हरिहरविरिञ्चादिभिरपि प्रणन्तुं स्तोतुं वा कथमकृतपुण्यः प्रभवति ।। सौ. ल.

**१ य एकोवर्णो बहुधा शक्तियोगात्।**
**वर्णाननेकान्निहितार्थो दधाति ।।** श्वेताश्वतर -४-१

**• मायाशक्तिः -**

इयं च शक्तिर्वा माया चैतन्यं विहाय स्वातंन्त्रेणावस्थातुं नैव प्रभवति। यद्यप्यचेतनेयं शक्तिः चैतन्यादप्यधिकमिवैव व्यापारं व्यवहारं विधित्सति। विषयेऽस्मिन् तावच्छङ्कर भगवत्पादा दक्षिणामूर्तिस्तोत्रे - मायाशक्तेरधिकरणावरणयोरभेदास्पदत्वं सूचयितुं राहुग्रस्तचन्द्रमसो दृष्टान्तं प्रतिपिपादयिषन्ति। तथाहि - राहुग्रस्त-दिवाकरेन्दुसदृशो मायासमाच्छादनात् - इति। एवं च शक्तिशक्ति-मतोरंभेदस्तु श्रुतिस्मृतिपुराणेतिहासादिषु', लौकिक-साहित्यग्रन्थेषु च प्रसिद्ध एवास्ति। सिद्धान्तस्यास्य च मूलाधारस्तावदुपनिषदां समुच्चय एव।

उपनिषदो ब्रह्मसूत्राणि तथा भगवद्गीतेति त्रयं तावत् प्रस्थानत्रयमित्येव प्रथितमस्ति। तत्रच त्रितयस्यापि भाष्येषु सामान्येनोपविंशत्युपनिषद-श्चोल्लिखिताः सन्ति। तदनन्तरकालेषु तावत् पारेशतं संख्या उपनिषदामुपलभ्यते। तासामवलोकनेन काश्चिचदुपनिषदस्तु पुराणगतशैलीसमन्विता इतिवावगम्यन्ते। ऋषीणांसत्यवचसां तपः शक्त्या इमाश्चानन्तरानेहसाप्रकटिता-श्चोपनिषदः परमर्षिणां दृष्टिगोचरा बभूवुर्वा नवेति संशीतिरुदेति। कथमपि वा भवतु तत्समनन्तरकालीनानामुपनिषदां तत्त्वानि तावत् हृदयङ्गमानीतितु पारेवाचमिति जिज्ञासूनामनुभवः ।

सर्वथा - सर्वासामुपनिषदामात्मयाथात्म्यनिरूपणेनैवोपक्षयात् गीतानां मोक्षधर्माणां च एवं परत्वात् इति श्रीशङ्करभगवत्पादानां वचनं तावदुपनिषदामग्रिमोद्देश्यं "आत्मस्वरूपावधारणमिति" सुसूचयिषति। तथाचोपनिषत्सु - तावदात्मनो वैविध्यमय

**२ मायां तु प्रकृतिं विद्यात् मायिनं तु महेश्वरं।**

**भगवन्तं देवं शिवशक्त्यात्मकमेवोदितम्**

त्रिपुरातापिन्युपनिषत् १-१७

**३ ईशावास्य भाष्योपक्रमः**

स्वरूपनिरूपणावसरे शिवतत्त्वं शक्तितत्त्वं चानन्ये इति सर्वत्रोपन्यस्यने। कासुचिदुपनिषत्सु शिवतत्त्वं स्वातन्त्रेणोपपाद्यते चेत् अन्यास्वरि कासुचिदुपनिषत्सु शक्तितत्त्वमप्यनाकुलं पार्थक्येन निबध्यते। उपनिषत्सङ्ग्रहेषु तावत् शिवोपनिषदः शाक्तोपनिषदश्चेति विभागोऽपि निबद्धो दृश्यते। संप्रति तु शाक्तोपनिषदां तत्त्वानां सिंहावलोकनमत्र चिकीर्ष्यते।

यद्यपि शक्तिविशिष्टं तावच्छिवतत्त्वं तथापि निर्गुण-परमात्मत्तत्त्वादभिन्नमित्येव सर्वत्र प्रतिपाद्यतेतराम्। निर्गुणोपास-कानां सगुणोपासकानां वा कृते यदानुकूल्यं भवेदुपासनार्थं तदेवात्रोपनिषत्सु प्रकाश्यते। "निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनं" "सत्य ज्ञानमनन्तं ब्रह्म" "अस्थूलमनणु अह्रस्वमदीर्घ-मलोहिपमच्छायं..... इत्यादि वाक्यैर्ब्रह्मणो दुरवगमत्वं तावदुपा-दीयते। अत एव बहुविधानि तस्य स्वरूपाणि शाखाचन्द्रन्यायेन उपासकानां सौकर्यायोपदिश्यन्ते। तेषु च वैविध्यमयस्वरूपेषु शिवतत्त्वमपि स्वरूपान्यतममित्येव गमनार्हो विषयः। तच्च शिवतत्त्वं शक्तितत्त्वविशिष्टं यदत्यन्तमेव व्यापकत्वेन सर्वव्यवहारकारकत्वेनच परिगण्यत इति तत् मार्कि अष्टाविंशत्युपनिषत्सु प्रतिपाद्यमान-मवलोक्यते। अतएव तच्च तत्त्वं श्रीचक्रं, कालीस्वरूपं, बनदुर्गा, राजश्यामला, सरस्वती, गायत्रीत्यादि स्वरूपेषुविभक्तमित्येव तदधिगमे तावदवधानं दीयमानमपेक्ष्यते।

त्रिगुणात्मकं हिरण्यगर्भचैतन्यमीश्वरो वात्वव्यक्तस्वरूपेणावतिष्ठत इति यदुक्तं तस्यैव मायाशक्तिप्रभावेण ब्रह्मविष्णुमहेश्वराः स्वां स्वां शक्तिमधिष्ठाय व्यक्तस्वरूपाण्यभजन्त इति तु प्रसिद्धमेव। व्यक्ताव्यक्तस्वरूपधारिणी शक्तिरेव सा सामान्येनोपत्रिंशदुपनिषत्सु तोष्टूयते। सर्वथा शक्त्याश्रितमेव समग्रमिदं विश्वमिति सर्वास्वप्युनिषत्सु जेगीयते।

प्रत्येकस्या अप्युपनिषदः प्रारम्भे कस्यचित् शान्तिपाठस्य पठनं त्तावत् संप्रदायान्तर्गतमिति तु विवादविहीनोऽयं विषयः। उदाहरणार्थमीशावास्योपनिषदः प्रारम्भे पूर्णमदः पूर्णमिदमिति शान्ति पाठःपठ्यते। एवमेव सर्वासामप्युपनिषदां प्रारम्भे समाप्तिभागे च मङ्गलपाठस्य शान्तिपाठस्य वा संप्रदायः दरीदृश्यते। प्रसिद्धासु दशोपनिषत्सु ये शान्तिपाठा: पठ्यन्ते त एव शन्तिपाठास्तु सर्वास्व- बशिष्टास्वप्युपनिषत्सु निगद्यन्त एव। अतएव ब्रह्मसूत्राणां भाष्येषु तावत् प्रथमपदे एव सर्वेऽपि शान्तिपाठाः निबद्धाः सन्ति। यतोहि ब्रह्मसूत्राणि तावत्सर्वासांमुपनिषदां (उपविंशत्युपनिषदां) तत्वांशान्स-मासेन निविभन्सन्ति। ब्रह्मसूत्राणां भाष्ये तावत् सर्वासामुपनिषदां वाक्यानि यानि सूत्रसंबध्दानि सन्ति तानि यथेच्छमेवोदाह्रियन्ते । अत एव श्रीशङ्करभगवत्पादाः मालायां सूत्रे सुमनसो यथा निबद्धा भवन्ति तथैव उपनिषद्वाक्यानि सूत्रैः सूच्यन्त इति उपनिषद्वाक्यानि तावत् भाष्येषु विकीर्णानि सन्ति। अत एव तेषां पठनावसरे प्रांरम्भे एव शान्तिपाठानां पठनं संप्रदायसमन्विता सरणिर्दृश्यते।

**• सीतोपनिषत्**

तत्र प्रथमं तावत् सीतोपनिषदः मङ्गलपाठः आहोस्वित् शान्तिपाठः - भद्रंकर्णभिः श्रृणुवाम देवा:- इति वर्तते। अस्यामुपनिषदि सीतादेवी तावत् मूलप्रकृतिरूपा इत्येव गीयते। प्रकृतिरपि प्रणवस्वरूपेणावतिष्ठते। तस्याः व्यक्ताव्यक्तस्वरूपत्वं तावत् सिद्धमेव। ४ वेदान्त वाक्यकुसुमग्रथनार्थत्वात् सूत्राणाम् । उपनिषद्वाक्यानि हि सूत्रैरुदाहृत्यविचार्यन्ते । ब्र. सू. शा. भाष्यम् १-१-२

**मूलप्रकृति रूपत्वात्सासीता प्रकृतिः स्मृता ।**

**प्रणवप्रकृति रूपत्वात् सा सीता प्रकृति रुच्यते ।।** सीतोपनिषत् - २

**शाक्तोपनिषदः - एक सिंहावलोकनम्**

सा तु सर्वदेवमयी सर्ववेदमयी सर्वलोकमयी. चेतना चेतनात्मिका शक्तित्रयात्मिका नीलात्मिका सोमसूर्याग्निरूपा, भूदेवीरूपा योगशक्ति-भोगशक्ति - भुवनाधाररूपा इत्येव प्रशस्यते। वीरशक्ति-रूपाप्यस्तीति विशेषः। अष्टौ मन्त्राः अस्यामुपनिषदि सीतायाः सकलजगदाधारत्वेन तुष्टूषन्ति।

**• अन्नपूर्णोपनिषत्-**

यद्यपि इयमुपनिषत् शक्तितत्त्वमेव विव्रीषति तथापि शक्तिमतः शिवस्यैव तत्त्वं वर्णयति। तच्च शिवतत्त्वं साक्षात् ब्रह्मणः स्वरूपमास्थाय तिष्ठतीति तु पूर्वमेवोक्तचरम्। पञ्चाध्यायेषु विभक्तेयमुपनिषत् अन्नपूर्णाम्बायाः तान्त्रिकमन्त्रमपि दधाति। बीजाक्षरसमन्वितोऽयं मनुः नमो भगवत्यन्नपूर्णे..... इत्यादि संबोधनपूर्वेण शब्देन प्रारभते । अभीष्टमन्नं देहीति प्रार्थनामयोऽयं मनुः तन्त्रशास्त्रे विशेषतः आम्नायमन्त्रेषु तथैव पठ्यते। श्री शङ्करभगवत्पादानां - नित्यानन्दकरी वराभयकरी सौन्दर्यरत्नाकरी इत्यादिप्रारभमाणस्यान्नपूर्णाम्बा स्तोत्रस्यप्रभावः अस्यामुपनिषदि बाढं दृश्यते। पञ्चाध्यायेषु विभक्तेयमुपनिषत् शङ्करभगवत्पादानां उपनिषत्तत्त्वसारांशानाहो अद्वैतवेदान्ततत्वांशान् बाढमेव प्रतिपा-दयति। पार्वतीस्वरूपेयमन्नपूर्णा हिरण्यगर्भस्य ब्रह्मणः शक्तिस्वरूपा जगदाधारभूतेव। तत्वतो विचार्यमाणे जगदिदं रज्जौ सर्प इव भ्रमात्मकमित्येव दृश्यते । यथा रज्जुरेवाधिकरणं सर्पस्य वा सर्पभ्रान्तेः तथैव जगदिदं ब्रह्मचैतन्ये चाध्यस्तमेवास्ति । स्वित

**५ नित्यानन्दा निराधारा विख्याता विलसत्कचा।**

**अन्नपूर्णाम्बोपनिषत्-५**

ज्ञानिनां जगदिदं मिथ्या नतु संसारे वर्तमानानां कृते। गौडपादनामा- चार्याणां माण्डूक्यकारिकायां यश्चजातिवादः श्रूयते तस्यापि प्रभावश्चावलोक्यते। तथाहि यदिदं दृश्यते किञ्चित् तत्तन्नास्तीति भावय। यथा गन्धर्वनगरं यथा वारि मरुस्थले ।। अन्नपू - १-२०

एवमेव परमात्मचैतन्यस्य विविधस्वरूपं, जीवन्मुक्तस्य लक्षणानि, योगस्य साधनमार्गे चित्तनिग्रहार्थत्वं, मनोनाशः वासनाक्षयादि विविध तत्त्वांशा बाढमस्यामुपनिषद्युपनिबध्दाः सन्ति। शक्तिनिरूपणापदेशेन सर्वोऽयं वेदान्तविषयश्चोपन्यस्तोऽस्ति।

**• सावित्र्युपनिषत् -**

अथ च सावित्र्युपनिषदः आप्यायन्तु ममाङ्गानि वाक् पाणिश्चचक्षुश्श्रोत्रमथोबलं इति शान्ति पाठस्तु श्रूयते । सावित्री शक्तितत्त्वं तावत् द्यौः आदित्यः चन्द्रः मनः पुरुषः स्त्री इत्यादि सर्वविधस्वरूपधरमित्येव स्तूयते। गायत्रीमन्त्रस्य विविधानाम-वयवानां वैशिष्ट्यं प्रदर्शयन्तीयं उपनिषत् एकस्मिन्नेव लघ्वध्याये बलातिबलामन्त्रस्य स्वरूपमपि सूचयति। क्षुधाबाधां पिपासां च निवारयितुं सामर्थ्यमवासुं विश्वामित्रमहर्षिः रामलक्ष्मणाभ्यां यं च मनुमुपदिदेश स एव मनुः प्रकारान्तरेण बीजाक्षरसमन्वितो यथोपदिश्यते तथैवास्ते चास्यामुपनिषदि। केवलं दशमन्त्रेष्वेव विषयोऽयमुपन्यस्तः शाक्ततत्त्वनिरूपणव्याजेन।

**६ व्युत्थितस्यभवत्येषा समाधिस्थस्य चानघ।**

**ज्ञस्य केवलमज्ञस्य नभवत्येव बोधजा।।** अन्नपू १-२६

**७ कः सविता का सावित्री आदित्य एव सविता, द्यौः सावित्री एव सविता नक्षत्राणि सावित्री ...**चन्द्र सावित्र्युपनिषत् -१-५,६

**• सौभाग्यलक्ष्म्युपनिषत्**

उपनिषदियं खण्डत्रये विभक्तास्ति। महालक्ष्म्याः स्वरूपं तावद् ब्रह्माभिन्नमितितु स्पष्टमेव। हिरण्यावर्णां हरिणीं सुवर्णरजतस्रजां इत्यादि श्रीसूक्तमन्त्रमधिष्ठाय उपनिषदियं प्रवृत्तास्ति । महालक्ष्म्याः स्वरूपं तावत् - तुरीयरूपां तुरीयातीतां सर्वोत्कटां सर्वमन्त्रासनगतां पीठोपपीठदेवता-परिवृतां चतुर्भुजां श्रियं हिरण्यवर्णामिति पञ्च-दशर्भिः ध्यायथ। (सौभा०-१-२) इत्येवोपन्यस्यते उपनिषद्देहल्याम्। श्रीसूक्तमन्त्रैरेवाङ्गन्यासादिकं विधेयमिति वैशिष्ट्यं सूच्यते। एवमेवास्माकं सौभाभ्यप्रदाने सा महालक्ष्मीः कृपां कुरुतात् इति प्रार्थनापि श्रूयतेऽत्र । तथाहि -

**१४ एवं मूहूर्तत्रयं भावनापरे जीवन्मुक्तो भवति।** भावनोप -४

अमलकमलसंस्था तद्रजःपुञ्जवर्णा करकमलधृतेष्वाभीति युग्माम्बुजा च। मणिमुकुट विचित्रालङ्कृता कल्पजालैः सकलभुवनमाता सन्ततं श्रीः श्रियै नः ।। सौभा-१-४

श्रीयन्त्रं विलिख्य श्रियमावाहनादिभिः सपर्या समर्पणीया इति विधानमपि सूचयति । हरिप्रियायाः विविधाश्चोपासनाश्चात्र निबद्धाः यासु एकाक्षरीमन्त्रः, चक्रं चोपन्यस्यते। प्रपञ्चे स्थिताः परमार्थं सिषाधयिषन्ति ये तेषां कृते प्रेयः साधनं श्रेयःसाधनमित्युभयमपि दिदर्शयिषति ।

उत्तमाधिकारिणो ये ब्रह्मजिज्ञासया उत्तरेण पथा यियासन्ति ते तु सामान्यनियमानुसारेण निष्कामकर्मसंकल्पेन ज्ञानयोगसिद्धिं लब्धु-मिच्छन्ति, लभन्ते च। अयं तु विस्मयास्पदं विषयो यत् एकेनैव मन्त्रेण समग्रस्य ज्ञानयोगस्य सारो निषिच्यते । तथाहि योगेन योगो ज्ञातव्यो योगो योगात् प्रवर्धते ।

**योऽप्रमत्तस्तु योगेन सयोगी रमते चिरम् ।।** (सौं-२-१)

अत्र ज्ञानयोगात् प्रत्यक्परयोः योगः नामैक्यं प्रवर्धते, तत्रैव अनुसन्धानपरः साधको नितरां रमते इति ब्रह्मात्मैक त्वविज्ञानमेव निदधतीयमुपनिषन्मुद्रादिभिः प्राणायामैश्च । सदाचारनिष्ठः साधकः कथं वा प्रत्यगभिन्नविज्ञान-शिखरमारोहतीति समासेनेवमुच्यतेसमा-पय्यनिद्रां सुजीर्णे ऽल्पभोजी श्रमत्याज्यबाधे विविक्ते प्रदेशे। सदासीत निस्तृष्ण एष प्रयत्नोऽ थवा प्राणरोधो निजाभ्यासमार्गात्।।

एवमेव नादाविर्भावपूर्वकं ग्रन्थित्रयं निर्भिद्य महाशून्यावस्था-मवाप्याखण्ड-ब्रह्माकारवृत्तिमनुभूय कृतकृत्यो भवति। नवचक्रपथेन गतो योगी परशून्यं ध्यायन् परमपदं निर्विकल्पक समाधिमाप्नोति। त्रिपुटी रहितोभूत्वा सोऽहमीति ब्रह्मात्मैक्यानन्दनिष्ठो रमते। एवं सौभाग्यलक्षणाः उपासनेन मृदितकषायो योगमार्गे निरन्तरमेव निरन्तरायो भूत्वा समाधिमधिगच्छतीति परमप्रयोजनमपि बोधयतीयमुपनिषत् ।

**• बह्वृचोपनिषत्**

अस्यामुपनिषदि केवलं नवमन्त्राः सन्ति। चिच्छक्तिरेव हिरण्यगर्भस्य मायाशक्तिरस्ति। मायासमन्विशक्तिमेव ब्रह्म तावादनूनकस्य जगतोऽधिष्ठानं कारणमित्येवास्ति तत्त्वम् । अस्मादेव हिरण्यगर्भात् ब्रह्मविष्णुमहेश्वराः प्रकटितरूपं दधुः। तस्या एवब्रह्माजीजनत्। विष्णुरजीजनत्, रुद्रोऽजीजनत्। गन्धर्वासरसः किन्नराः अजीजनन् (बह्वचोप०-२) इत्येव मायाशक्तेः वैशिष्ट्यं प्रदर्शयति। तन्त्रशास्त्रे तावत् कादिविद्या हादिविद्यासादिविद्येति बीजाक्षरमयी मन्त्रविद्या या तस्या अपि विद्यायाः जनयित्री इयमेव चिच्छक्तिरिति जेगीयते। इयमेव चिद्विद्या अद्वितीया ब्रह्मसंवित्तिः, सच्चिदानन्दलहरी महात्रिपुराहंब्रह्मास्मीत्यादि महावाक्यानामनु-सन्धानेन परब्रह्माभिन्त्रा इयमादिशक्तिरेव मुक्तिस्वरूपमानयतीति विशेषः। इयमेवादिशक्तिः महात्रिपुरसुन्दरी, बाला, अम्बिका, बगला, मातङ्गी भुवनेश्वरी चामुण्डी बाराही, सावित्री सरस्वतीत्यादि तन्त्रोक्तसकलदेवतास्वरूपिणीत्येव सकलोपनिषत्सार इति विशेषः। वाङ्गमेमनसि प्रतिष्ठिता... इतिशान्तिपाठस्तु अस्यामुपनिषदि आदावन्ते च पठ्यते ।

**• सरस्वत्युपनिषत्-**

ऋग्वेदे श्रूयमाणान्सरस्वतीमन्त्रान् विनियुज्य बीजाक्षरसंयोजनेन तान्त्रिकमन्त्राणां सहयोगेन च विशिष्टाः मन्त्राः संपादिताः सन्ति। तेषामपि परायणेन श्रद्धां मेधां सकलविद्याभचाधिगन्तुं पार्यत इति फलश्रुतिः। निष्कामकर्मविनियोगे तु साधनमार्गे दुतगत्या परमपदमवासुं फलश्रुतिः । अत्रापि शान्तिपाठो न विद्यते ।

*** श्रीचक्रोपनिषत्**

अस्यामुपनिषदि गौरीर्मिमाय सलिलानि तक्षत्येकपदीतिमन्त्रस्य जपादिकं विधीयते। सहस्रं कलशान्संस्थाप्य शतं वा नव वा चरमपक्षे एकं वा कलशं विन्यस्य पूर्णाभिषेकं चरेत्। अष्टवारं वा पंचविंशतिवारं वा कुरुते नोचेत् केवलं शतवारं जपं कृत्वा सिद्धिं समधिगच्छति। श्रीचक्रन्यासं कृत्वा मूलाधारात् क्रमेण सप्तचक्रं न्यसेदिति विधिः। स्वराट् चक्रं विराट्चक्रमित्यादि सप्तचक्राणि समाख्यातानि

**२७ जीवः परः परोजीवः सर्वं ब्रह्मेति भावयेत्**

वनदुर्गोपनिषत् - अन्तिमः श्लोकः

**पितापनिषदः- एक सिंहावलोकनम्**

सिद्धिस्तावदनिर्वचनीया भवति। महाकविरपि भवितुमर्हति। निर्विकल्पेन मनसा विधिमिमं चरतिचेत् कालीस्वरूपो भवतीत्युच्यते। इमां शक्तिं विना नकिमपि साधयितुं शक्नोति तथाहि- "विनाशक्तिं न मोक्षो न ज्ञानं न सत्यं न धर्मो न तपो न हरिर्नहरो न विरिञ्चिः । सर्वं शक्तियुक्तं भवेत् सत्संयोगात् सिद्धीश्वरो भवेत्।" इतिश्रीचक्रोपासनायाः वैशिष्ट्यान्तरं निरिरूपयिषति ।

**• श्रीविद्यातारकोपनिषत्**

अत्र शंनो मित्रः शं वरुणः इति शान्तिपाठः। इयमुपनिषत् चतुर्षु पादेषु विभक्ता वर्तते। अगस्त्यमहर्षिः हयग्रीवं तारकं किमिति पृच्छति। उत्तररूपेण हयग्रीवः ओंकारस्वरूपं वर्णयति। तथा च शक्तिरपि सकलस्यापि जगतः जन्म स्तितिभङ्गं सिषाधयिषति। जाग्रत्स्वप्नसुषुप्त्यवस्थाधिष्ठायिनीयं शक्तिरेव कूटत्रयत्वेनोल्लिख्यते। जाग्रदशाधिष्ठायिनी इच्छाशक्त्यात्मिका कामेश्वरीति प्रथमकूटेति मन्यते। स्वाप्नदशाधिष्ठयिनीक्रियारूपा विष्णवात्मिका इच्छा शक्तिस्वरूपिणी द्वितीयकूटेतिनिगद्यते। प्रथमकूटा तावत् मित्रेशनाथात्मिका द्वितीयकूटा तु षष्ठीशनाथात्मिकेति विशेषः। तृतीया तावत् सुषुप्तिदशाधिष्ठायिनी आनन्दकलेति तृतीयकूटा इत्येव मन्यते। षोडशाक्षरी तावत् चतुर्थखण्डात्मिकेत्युच्यते। इयमेव प्रपञ्चोपशमनी अद्वैतेत्येव जेगीयते। इमामेव चतुष्कूटामिति मत्वा साधकाः मुक्ता भवन्ति निष्कामभावनया यदि श्रद्धयोपासिता चेत् ।

**• षोडोपनिषत्-**

अत्र शान्तिपाठो नास्ति। षट्कलां देवीं य उपासते सः सकलसिद्धीश्वरो भवति। परा परात्परा परात्परातीता चित्परा चित्परात्परा चित्परात्परातीता इति ताः षट् कलाः । प्रथमा तावत् वैष्णवकलेति गीयते । द्वितीया तावत् श्रीकलेत्युच्यते । कामकलासं-पुटिता श्रीकला श्रीकलापुटितां कामकलां लिपिस्थाने न्यसेदिति विधिः। अत्र फलं तावत् साधकः जलतरणं कर्तुं प्रभवतीत्युच्यते । एवमेव विविधकलानामुपासनेन विविधानि फलानि लभत इत्युच्यते। षष्ठीं कलां य उपासते श्रद्धया स कालीरूपो भवतीति विशिष्टा फलश्रुतिः। षोडोपनिषत् इति नामधेयं तावद्विस्मयास्पदं दृश्यते ।

**• सुमुख्युपनिषत्**

अत्रापि शान्तिपाठो नास्ति। शवाधिरूढा सुमुखीयं सपर्यायां ध्येयेतिविधिः वामाचारस्य सरणिरियं निरूपितास्ति पललादिकं नैवेद्यार्थे संस्थाप्य सपर्यादिकं निर्वर्तनीयमिति नियमः । तेन सर्वेश्वरो वति लोकाध्यक्षो भवतीति फलश्रुतिः।

**• हंसषोढोपनिषत्**

सरस्वतीस्वरूपोपासनस्य विधि निबध्नातीयमुपनिषत्। षट्चक्र-वासिनी, वागीश्वरी, पुस्तकाक्षमालाधारिणीत्यादिविशेषणैर्देवी

तावदुपास्यते। 'हसः' बीजमन्त्रं प्रथममुच्चार्य कं खंगं इत्यादि मातृकामयो मन्त्रः उपासनायां विधीयते। सकलजाड्यं, दारिद्र्यं शत्रुभयादिकं नाशयितुं प्रार्थना मन्त्रे श्रूयमाणा दृश्यते। विशेषोपासनया सर्वसिद्धीश्वरो भवेत् कालीस्वरूपं च विन्दतीति फलश्रुतिः। साक्षात् सदाशिव एव सोऽहं हंसः इत्युक्तवानित्येव हंसशब्दस्य निरवधिकं वैशिष्ट्यमिति तोष्यते। अत्रापि शान्तिपाठो यद्यपि नास्ति तथापि सोऽहं हंस इति भगवद्वाणीमुपन्यस्य मङ्गलमातनोतीयमुपनिषत् उपक्रमोक्तरीत्या सर्वास्वप्युपनिषत्सु परब्रम्हचैतन्य-स्वरूप-मेवाग्रिमोद्देश्यत्वेन प्रतिपाद्यते। सच्चिदानन्द-स्वरूपस्य नित्यशुद्ध- बुद्धमुक्तस्वभावस्य परमात्मनः निर्गुणस्वरूपं तावत् मायाशक्तेः सहयोगेन सगुणरूपमिव भूत्वा ब्रह्मविष्णुमहेश्वराणां प्रकटितरूपाणां मूलकारणं भवतीति सर्वास्वपि जोधुष्यते। प्रायः बह्वयश्च इमा उपनिषदः श्रीशङ्करभग-वत्पादानामनन्तरकाले निर्मिता वा प्रकाशतां गता इति स्पष्टमेव वेविद्यते। यतोहि अद्वैतवेदान्तस्यैव बहवोऽप्यंशाः साकल्येन प्रतिबिम्बिताः सन्ति। कासुचित् उपनिषत्सु शान्तिपाठस्य निवन्धनमेव न दृश्यते। अन्यत्र कासुचिदुपनिषत्सु केवलं तन्त्रोक्त-मन्त्राः तेषां जपस्य प्रक्रियाः, ऋष्यादिविषयाः बीजमन्त्राक्षर-समन्विता विलोमप्रतिलोमसरणिः फलश्रुतिः इत्याद्यंशाः निबद्धाः सन्ति। उपनिषदश्च प्राग्रहरलक्ष्म तावत् शान्तिपाठः स एव न दृश्यत इति विस्मयास्पदं विषयः। केवलं शीर्षिकायां उपनिषत्च्छब्दो निविष्ट इत्येकेनैव कारणेन उपनिषत्सु ताः परिगणिताः सन्ति ।

चतुर्दशीयशतमाने विद्यारण्यश्रीचरणैः लिखितात् वेदान्तपञ्च-दशीग्रन्थादनेके श्लोकाः सरस्वत्युपनिषदि संगृहीताः सन्ति। श्रीविद्यारण्यश्रीचरणाः वेदान्तपञ्चदशीग्रन्थे शुद्धसत्त्वप्रधाना माया ईश्वरोपाधिः मलिनसत्वप्रधाना चाविधा जीवोपाधिरिति मायाविद्ययोर्भेदं प्रदिदर्शयिषन्ति कार्यकारणरूपेण । तथाहि -

सत्वशुद्ध्यविशुद्धिभ्यां मायाविद्येच ते मते 1 मायाबिम्बं वशीकृत्य तां स्यात्सर्वज्ञ ईश्वरः अविद्यावशगस्त्वन्यस्तद्वैचित्र्यादनेकधा ।।

**• वेदान्तपञ्चदशी**

इमेऽपि तत्त्वांशाः अस्यामेवोपनिषदि समुल्लिखिताः सन्ति। श्रीविद्यारण्यश्रीचरणानामेव दृग्दश्यविवेकग्रन्थे जीवत्रयविभागोऽपि निबद्धोऽस्ति। व्यावहारिकजीवः प्रातिभासिकजीवः पारमार्थिकजीव इति त्रयो जीवाः विवृताः सन्ति। तत्र व्यावहारिक जीवप्रतिपादकः श्लोकः साक्षादेवात्रोपनिषदि संगृहीतो दृश्यते । अस्ति भाति प्रियं रूपं नाम चेत्यंशपञ्चकम। आद्यत्रयं ब्रह्मरूपं जगद्रूपं ततो द्वयम् ।। इत्ययं श्लोकः वेदान्तपञ्चदश्यां वर्तते यश्च श्लोकोऽपि अस्यामुपनिषदि समानीतोऽवलोक्यते। एनेनेदमपि स्पष्टं यदियमुपनिषदनन्तर-कालीनेत्येव गदितुं प्रभवामः। आसु शाक्तोपनिषत्सु तावत् तन्त्रशा-स्त्रोक्ताश्रीचक्रोपासना, सपर्यासरणिः बीजाक्षराणां मन्त्राणां च विनि-योगः वामाचारस्यापि पद्धतिः, देव्याः विविधस्वरूपणि फलश्रुतिः इत्याद्याः सर्वेऽप्यंशाः प्रकाशिताः सन्ति। यद्यपि पुस्तकस्य साहाय्येन जपादिकं कर्तुं शक्यते तथापि गुरुमुखेनोपदेशं गृहीत्वैवोपासना करणीया इति संप्रदायस्य वैशिष्ट्ये चावधानं दीयमानं दृश्यते। काश्वचनोपनिषदश्चातीवलघ्व्यः एकस्मिन्नेवपुटे उपक्रमोपसंहार-समन्विताः सन्ति परं एका तावत् वनदुर्गोपनिषत् चत्वारिंशत्पुटपर्यन्तं एकमेवदीर्घमन्त्रमुपन्यस्य स्वीयं वैशिष्ट्यं दधते। आसामुपनिषदां शैली तावत् निगूढतत्त्वांशान् सामान्यपाठक स्यापि गृहदेहलीं प्रापयितुं क्षमेति सर्वेषामनुभवः। यत्र विषयप्रतिपादनं वर्तते फलश्रुतिनिरूपणं भवति तदा सुन्दरैरुदाहरणैर्विषयो यथा हृद्गतो भवति तथा विधातुं सरला शैली तावत् मनोहरा दृश्यते। वैदिकमन्त्राणामपि बीजाक्षरैर्विमियिज्य उपासना यथा सत्त्वयुता भवेत् तथा संप्रदायं निरुरूपयिषति। सर्वथा यथा पाठकानाम-भिरुचिर्वर्धते तथा सुलभा चोदारगुणान्वितेयं कथमपि वा भवतु महामायायाः आदिशक्तेः स्वरूपावतरणमासु शाक्तोपनिषत्सु साधकानामुपासनायने श्रेयांसिसिषाधयिषतीत्यत्र न सन्देहस्पन्दोऽपि। सर्वथा त्वदीयाभिर्वाग्भिस्तव जननि वाचां स्तुतिरियमिति - तुष्टूषत्ययं जनः-

तव तत्त्वं नजानामि कीदृशासि महेश्वरि यादृशासि महादेवि तादृशायै नमो नमः ।। इति सर्वं निरवद्यम् ।

**उपसंहार**

आसामुपनिषदां शैली तावत् निगूढतत्त्वांशान् सामान्यपाठक स्यापि गृहदेहलीं प्रापयितुं क्षमेति सर्वेषामनुभवः। यत्र विषयप्रतिपादनं वर्तते फलश्रुतिनिरूपणं भवति तदा सुन्दरैरुदाहरणैर्विषयो यथा हृद्गतो भवति तथा विधातुं सरला शैली तावत् मनोहरा दृश्यते। वैदिकमन्त्राणामपि बीजाक्षरैर्विमियिज्य उपासना यथा सत्त्वत्युता भवेत् तथा संप्रदायं निरुरूपयिषति। सर्वथा यथा पाठकानामभिरुचिर्वर्धते तथा सुलभा चोदारगुणान्वितेयं कथमपि वा भवतु महामायायाः आदिशक्तेः स्वरूपावतरणमासु शाक्तोपनिषत्सु साधकानामुपासनायने श्रेयां सिसिषाधयिषतीत्यत्र न सन्देहस्पन्दोऽपि। सर्वथा त्वदीयाभिर्वाग्भिस्तव जननि वाचां स्तुतिरियमिति - तुष्टूषत्ययं जनः-

तव तत्त्वं नजानामि कीदृशासि महेश्वरि यादृशासि महादेवि तादृशायै नमो नमः।। इति सर्वं निरवद्यम्।

शास्त्रीभिः शक्तुपनिषद् एकं सिंहवलोकनम् मुख्यतया आध्यात्मिक-चिन्तनपरमात्मा त्रिगुणात्मिका मायाशक्तिः इति ग्रन्थस्य माध्यमेन उपनिषदानां विस्तारं कृतम् अस्ति। अनेकदेवतानां उपनिषदव्याख्या अत्र व्याख्याता शक्तिदेवतायाः विशेषतः उपनिषदस्य वर्णनं स्वशैल्या प्रस्तुतं कृत्वा संस्कृतभाष्यं दत्त्वा तेन क संस्कृते योगदानम्।

**ग्रन्थसूची**

1) शाक्तोपनिषदः - एकं सिंहावलोकनम् -- अखिलभारतीयविद्वत्प-रिषत् वाराणसी- २०१८



National Journal of Hindi & Sanskrit Research

ISSN: 2454-9177
NJHSR 2024; 1(52): 45-48

www.sanskritarticle.com

**गिरीशभट्टः बि**
सिद्धान्तज्यौतिषशास्त्रे-
विद्यावारिधि (Ph.D) शोधच्छात्रः,
ज्यौतिष-वास्तुविभागः,
राष्ट्रियसंस्कृतविश्वविद्यालयः, तिरुपतिः

**Correspondence:**
**गिरीशभट्टः बि**
सिद्धान्तज्यौतिषशास्त्रे-
विद्यावारिधि (Ph.D) शोधच्छात्रः,
ज्यौतिष-वास्तुविभागः,
राष्ट्रियसंस्कृतविश्वविद्यालयः, तिरुपतिः

# आयुर्वेद-ज्यौतिषशास्त्रयोः आधारेण पित्तजरोगाणां विमर्शः

**गिरीशभट्टः बि**

**सारांशः –**

आयुर्वेदशास्त्रस्य ज्यौतिषशास्त्रस्य च उभयोरपि शास्त्रयोः उगमस्थानं भारतमेव। आयुर्वेदशास्त्रं प्राचीनभारतीयवैद्यपद्धतिं बोधयति। प्राकृतिकरूपेण उपचारं कृत्वा रोगाणां शमनविधिम् आयुर्वेदशास्त्रं बोधयति। ज्यौतिषशास्त्रं तु त्रिस्कन्धात्मकं भवति – सिद्धान्तः, संहिता, होरा चेति। तत्र सिद्धान्तस्कन्धः सिद्धान्तज्यौतिषमिति उच्यते, होरा-संहितास्कन्धौ फलितज्यौतिषमिति उच्यते। तत्र फलितज्यौतिषशास्त्रेण सह आयुर्वेदशास्त्रस्य अन्तःसम्बन्धं वयं द्रष्टुं शक्नुमः। आयुर्वेदशास्त्रे यथा रोगाणां लक्षणानि, कारणानि, निवारणोपायाश्च प्रतिपादिताः तद्वदेव फलितज्यौतिषशास्त्रेऽपि इमे विचाराः प्रतिपादितास्सन्ति। किन्तु आयुर्वेदशास्त्रे औषधोपचारैः रोगोपशमनं कथं करणीयमिति निरूपिम्। फलितज्यौतिषशास्त्रे औषधोपचारेण सह पूर्वजन्मकृतानाम् इहजन्मकृतानाञ्च तत्तद्रोगकारकपापकर्मणः कृते धार्मिकविधिना परिहारः अपि करणीयः इति बोधितमस्ति। एवञ्च आयुर्वेदशास्त्रानुसारेण रोगाणां कारणं शरीरे वात-पित्त-कफदोषाणां वैषम्यम्। परन्तु फलितज्यौतिषशास्त्रस्यानुसारेण अस्माभिः पूर्वजन्मनि इहजन्मनि वा कृतानां पापकर्मणां वशात् शरीरे वात-पित्त-कफाख्यानां त्रिदोषाणां प्रकोपः भूत्वा रोगाः जायन्ते। अस्मिन् शोधपत्रे मया आयुर्वेद-ज्यौतिषशास्त्रयोः निरूपितान् पित्तजरोगविचारान् अधिकृत्य सङ्क्षेपेण निरूप्यते ।

**कूटशब्दाः –** आयुर्वेदः, ज्यौतिषम्, वातः, पित्तम्, कफः

**प्रस्तावना –**

आयुर्वेदशास्त्रानुसारेण वात-पित्त-कफाख्यानां त्रयाणां दोषाणां वैषम्येन रोगाः सम्भवन्ति। यथोक्तम् अष्टाङ्गहृदये श्रीमता वाग्भटाचार्येण – **"रोगास्तु दोषवैषम्यं, दोषसाम्यमरोगता"**[1] इति।

रोगाणाम् आगमनप्रकारमाश्रित्य रोगाः द्विधा वर्गीकृताः – निजरोगाः आगन्तुकरोगाश्चेति। त्रिदोषजनिताः रोगाः निजरोगाः, अभिघातादिकारणैः जनिताः रोगाः आगन्तुकाः। निजागन्तुक-रोगाणामयं भेदः यत् निजरोगषु आदौ त्रिदोषाणां वैषम्यं भवति, अनन्तरं रोगाः सम्भवन्ति। परन्तु आगन्तुकरोगेषु आदौ रोगसम्भवः भवति, ततः परं त्रिदोषाणां वैषम्यं भूत्वा इतोऽपि अधिकाः क्लेशाः सम्भवन्ति ।

तेषां रोगाणां शरीरं, मनश्चेति अधिष्ठानद्वयं भवति। रोगाणाम् अधिष्ठानभेदेन शारीरिकरोगाः मानसिकरोगाश्चेति द्विधा वर्गीकरणं कृतम्। शरीरसम्बद्धाः रोगाः शारीरिकाः, मनसः सम्बद्धाः रोगाः मानसिकाः।

पुनश्च रोगाणां चिकित्सार्थं स्वीक्रियमाणस्य कालस्य वशात् रोगाः द्विधा वर्गीकृताः – साध्याः असाध्याश्चेति। साध्याः रोगाः पुनर्द्विविधाः – सुसाध्याः कृच्छ्रसाध्याश्चेति। ये रोगाः स्वल्पया एव चिकित्सया झटिति उपशमनं यान्ति ते सुसाध्याः । येषां रोगाणां चिकित्सार्थम् अधिकः कालः अपेक्षते ते कृच्छ्रसाध्याः। असाध्याः रोगाः अपि द्विविधाः – याप्याः अनुपक्रमाश्चेति । येषां रोगाणाम् उपशमनं

सम्पूर्णतया कर्तुं न शक्यते, पथ्यादिकरणेन आजीवनं याप्याः भवन्ति ते याप्यरोगाः। ये गदाः पथ्येनापि यापयितुं न शक्यन्ते, येषाम् आक्रमणेन शीघ्रं मरणम्, चक्षुरादीनाम् इन्द्रियाणां नाशो वा सम्भवन्ति ते अनुपक्रमरोगाः। एवमाहत्य रोगाणां चिकित्सार्थं स्वीक्रियमाणस्य कालस्य सुसाध्याः, कृच्छ्रसाध्याः, याप्याः, अनुपक्रमाश्चेति चत्वारः रोगभेदाः सन्ति। ते च रोगाः उत्तरोत्तरम् अधिकाः क्लेशदायकाः भवन्ति। एवं रोगभेदानां सामान्यपरिचयः।

**त्रिदोषेषु पित्तदोषस्य स्थूलपरिचयः –**

समग्रशरीरे पित्तदोषस्य प्रभावः भवति चेदपि आधिक्येन नाभिः, आमाशयः, स्वेदग्रन्थिः, लसीका, रुधिरं, रसः, चक्षुषी, त्वक् – एतेषु अङ्गेषु पित्तदोषः प्रधानतया व्याप्तः अस्ति । तत्रापि हृन्नाभ्योरन्तराले पित्तदोषः आधिक्येन व्याप्तः भवति। तत्रापि नाभिः पित्तदोषस्य प्रधानं स्थानं भवति। पित्तदोषस्य आधिक्यात् जठराग्निः तीक्ष्णः भवति। पित्तदोषस्य उत्कर्षेण कोष्ठः (मलप्रवृत्तिः) मृदुः भवति। पित्तदोषः ईशत्स्नेहयुक्तः, तीक्ष्णः, उष्णः, लघुः, विस्रः, सरः, द्रवश्च भवति। कषाय-तिक्त-मधुररसाः पित्तदोषं घ्नन्ति, अम्ल-लवण-कटुकरसाः पित्तदोषं कुर्वन्ति। अयञ्च पित्तदोषः जीवनस्य यौवनावस्थायां, दिवसे मध्याह्नकाले, रात्रौ मध्यरात्रिकाले, भोजनानन्तरं भोजनस्य विदग्धावस्थायाञ्च प्रबलः भवति।

अयञ्च पित्तदोषः पञ्चप्रकारकः भवति – पाचकपित्तं, रञ्जकपित्तं, साधकपित्तम्, आलोचकपित्तं, भ्राजकपित्तञ्चेति ।

- **पाचकपित्तम् –** पाचकपित्तं पक्वाशय-आमाशययोर्मध्यभागे ग्रहण्यख्ये स्थाने अधिष्ठितं भवति। इदञ्च पित्तं पञ्चभूतात्मकं भवति। तथापि आग्नेयगुणाधिक्यात् त्यक्तद्रव्यगुणं तत् पित्तम् अनलम् इति नामान्वितं भवति। एतच्च पित्तम् अन्नं पचति, सारं किट्टं च पृथक्करोति। तत्रैव भूत्वा शेषाणां रञ्जकादीनां दलदानेन उपकारं करोति ।
- **रञ्जकपित्तम् –** इदं पित्तम् आमाशये भवति । इदं पित्तं रसधातोः रञ्जनं करोतीति कारणात् रञ्जकपित्तम् इत्युच्यते।
- **साधकपित्तम् –** इदं पित्तं हृदये अधिष्ठितं भवति । प्रज्ञा-मेधा-अहङ्कारादिभिः अभिप्रेरितार्थस्य बाह्यग्रहणस्मरणादिरूपेण साधनात् पित्तमिदं साधकपित्तमित्यभिधीयते ।
- **आलोचकपित्तम् –** आलोचकपित्तं नेत्रयोः अधिष्ठितं भवति। रूपग्रहणशक्तित्वात् एतत् आलोचकपित्तमित्युच्यते।
- **भ्राजकपित्तम् –** इदं पित्तं चर्मणि स्थित्वा चर्मणः दीपनं करोतीति हेतोः अस्य पित्तस्य भ्राजकपित्तमिति नाम।

**ज्यौतिषशास्त्रे पित्तजरोगाणां विचाराः –**

फलितज्यौतिषशास्त्रे रोगाणां कारण-लक्षण-परिहारादयः निरूपिताः सन्ति। रव्यादिग्रहाः कस्य कस्य दोषस्य कारकाः भवन्तीति निरूप्य तदनुसारेण तत्तद्गुहेण तत्तद्दोषोत्थरोगाणां चिन्तनक्रमः प्रतिपादितः अस्ति फलितज्यौतिषग्रन्थेषु। यथोक्तं प्रश्नमार्गे –

**यस्य ग्रहस्य यो दोषः पित्तादिष्विह कीर्तितः।**
**तेन रोगे तु वक्तव्ये वाच्यस्तद्दोषतो गदः॥**[2]

इति।

रव्यादिग्रहाणां त्रिदोषकारकत्वं प्रश्नमार्गकारेण अधोनिर्दिष्टश्लोके प्रतिपादितमस्ति –

**पित्तं वातकफौ पित्तं वातपित्तकफाः कफः।**
**कफवातौ च वातश्च सूर्यादीनां प्रकीर्तिताः॥**[3]

इति।

श्लोकेऽस्मिन् प्रतिपादितरीत्या ग्रहाणां कारकदोषाः अधोनिर्दिष्टे कोष्ठके प्रदत्ताः सन्ति –

| ग्रहाः | रविः | चन्द्रः | कुजः | बुधः | गुरुः | शुक्रः | शनिः |
|---|---|---|---|---|---|---|---|
| कारकदोषाः | पित्तम् | वातकफौ | पित्तम् | वातपित्तकफाः | कफः | कफवातौ | वातः |

कोष्ठकः १ : ग्रहाणां त्रिदोषकारकत्वम्

प्रश्नमार्गे एव श्लोकान्तरे **“वातं पित्तं च शनिः”**[4] इति शनेरपि पित्तकारकत्वम् उक्तं वर्तते। इत्थं रवि-कुज-बुध-शनयः पित्तकारकग्रहाः भवन्ति। अतः फलितज्यौतिषशास्त्रे पित्तदोषजन्याः रोगाः एतेभ्यः त्रिभ्यः ग्रहेभ्यः चिन्त्यन्ते। **“शनिवद्राहुः कुजवत्केतुः”**[5] इति फलदीपिकाकारस्य वचनानुसारेण राहुकेतुभ्याम् अपि पित्तजरोगान् चिन्तयितुं शक्यन्ते। पित्तदोषस्य उष्णगुणत्वात् उष्णजन्याः रोगाः पित्तजरोगाः भवन्ति। अत्यग्निः, वेदना, अन्तर्ज्वरश्च रविणा चिन्तनीयाः पित्तजरोगाः। उष्णप्रसरणं, दाहः, रक्तक्षोभभवाः व्रणाश्च कुजेन चिन्तनीयाः पित्तजविकाराः। शीतज्वरः, मतिभ्रमः, सन्निपातरोगाश्च बुधेन चिन्त्यन्ते। शनिः तृष्णा , अरुचिः , शरीरस्य समस्तावयवेषु वेदनां च जनयति। अत्र प्रश्नमार्गग्रन्थस्य वचनानि अधोनिर्दिष्टरीत्या सन्ति –

**अत्यग्निं वेदनामन्तर्ज्वरं चार्कः....।**[6]
**उष्णप्रसरणं दाहं रक्तक्षोभभवं व्रणम् ॥**
**भूमिजोऽथ बुधः कुर्याच्छीतज्वरमतिभ्रमौ।**
**सन्निपातरुजं चाथ........................॥**[7]
**तृष्णारुचिसमस्ताङ्गतोदांस्तरणीनन्दनः॥**[8]

इति ।

नेत्रसम्बद्धाः रोगाः आलोचकपित्तजनिताः भवन्ति। **“रविर्द्वादशे नेत्रदोषं करोति”**[9] इति चमत्कारचिन्तामण्युक्तरीत्या यस्य जातके द्वादशभावे सूर्यो विराजते सः नेत्रसम्बद्धरोगैः पीडितो भविष्यतीति वक्तुं शक्यते। तथा च, **“व्ययगृहगतश्चन्द्रो वामं हिनस्त्यपरं रविः”**[10] इति बृहज्जातकोक्तरीत्या यस्य जातके द्वादशभावे सूर्यः वर्तते सः दक्षिणनेत्रस्य हानिं करोति, यस्य जातके द्वादशभावे चन्द्रः वर्तते सः वामनेत्रस्य हानिं करोति। यस्य जातके द्वादशभावे रविचन्द्रौ उभावपि भवतः तस्य उभयोः नेत्रयोः हानिः जायते इति वक्तुं शक्नुमः।

द्वादशभावेषु रोगभावः इति षष्ठः भावः प्रसिद्धः। अतः सामान्यतः षष्ठभावस्थग्रहवशात् सामान्यतः रोगाः चिन्त्यन्ते। रोगसूचकाः पृथक् ग्रहस्थितिविशेषाः अपि वर्तन्ते। तत्र शुभाशुभग्रहाणां योगदृष्ट्या-दिसम्बन्धवशेन रोगाणां तीव्रता वा, न्यूनता वा वाच्या ।

एवञ्च उन्मादरोगस्य प्रकारेषु पित्तदोषोद्भवः उन्मादरोगः अपि अन्यतमः। प्रश्नमार्गग्रन्थे उन्मादरोगविषये सङ्क्षेपतः निरूपितमस्ति।

**संरम्भामर्षवैदग्ध्यमभिद्रवणतर्जनम्।**
**छायाशीतान्नतोयेच्छा रोषः पीतोष्णदेहता॥**[11]

इति श्लोके प्रश्नमार्गे पित्तोन्मादस्य लक्षणानि प्रतिपादितानि सन्ति। अर्थात् द्वेषः, अमर्षः, वैदग्ध्यम्, अभुद्रवणः, तर्जनं, छायेच्छा, शीतान्नतोयेच्छा, रोषः, शरीरस्य पीतवर्णता, देहे अत्यधिकम् उष्णता च पित्तोन्मादस्य लक्षणानि सन्ति । विरेचनचिकित्सया पित्तोन्मादस्य उपशमनं भवति। विषाहारसेवनम्, अशुचिभोजनम्, उपवासः, अतिभीतिः, वैराग्यं, वृथा क्रोधः, अभिचारः, गुरुनिन्दा, अग्निनिन्दा, देवतापवादः – एभिः दशभिः कारणैः उन्मादरोगः सम्भवतीति प्रश्नमार्गे निरूपितमस्ति। उन्मादस्य सर्वेष्वपि भेदेषु पित्तोन्मादः अत्यन्तं क्लेशदायकः भवति।

प्रश्नकुण्डल्यां चन्द्र-शुक्र-अष्टमेशाः अनिष्टस्थानेषु विद्यन्ते चेत् विषमाशन-उपवासादिभिः उन्मादरोगः आगतः इति वदेत् । चन्द्र-शुक्र-अष्टमेशेष्वन्यतमः राहु-केतु-मान्दिभिर्युक्ताश्चेत् अशुचिभुक्ति-वशात् उन्मादः आगतः इति वदेत्। कुजे पञ्चमभावस्थे सति क्रोधवशात् उन्मादः सञ्जातः इति वदेत्। पञ्चमे विकुजाः पापग्रहाः विद्यन्ते चेत् भीति-वैराग्वशात् उन्मादः आगतः इति वदेत्। अशुभग्रहेषु षष्ठगेषु सत्सु अभिचारवशात् उन्मादः आगतः इति वदेत् । पापग्रहेषु नवमसंस्थितेषु सत्सु गुर्वादिशापवशात् उन्मादः आगतः इति वदेत्। उन्मादरोगपरिहारार्थं कल्याणघृतं, पञ्चगव्याज्यम् (पञ्चगव्य-घृतम्) इत्यादिकं स्वीकरणीयम्। यथोक्तं प्रश्नमार्गे –

**चन्द्रशुक्राष्टमाधीशा गोचरेतरगा यदि।**
**विषमाष्ट्युपवासोत्थ उन्माद इति निर्दिशेत्॥**
**केतुमान्द्यहियुक्तेषु चैतेष्वशुचिभुक्तिजः।**
**सपापे पञ्चमे भीतिर्वैराग्योत्थस्स भूमिजे॥**
**क्रोधजोऽथाभिचारोत्थः षष्ठगेष्वशुभेषु सः।**
**गुर्वादिशापसम्भूतः पापे नवमसंस्थिते॥**
**कल्याणपञ्चगव्याज्यसोवाद्येषु विधीयताम्॥**[12]

इति ।

तथा च उन्मादकारकाः अष्टौ योगाः प्रश्नमार्गग्रन्थे निर्दिष्टाः सन्ति। तद्यथा –

१. धिषणे(गुरौ) लग्नस्थे , दिवाकरसुते(शनौ) द्यूनगे सति उन्मादरोगो सम्भवति ।
२. धिषणे लग्नस्थे , भौमे द्यूनगे सति उन्मादरोगो सम्भवति ।
३. मन्दे लग्नगते , महीनन्दने(कुजे) मद(७)-आत्मज(५)-तपः(९)संस्थे सति उन्मादरोगो सम्भवति ।
४. मूढशशीन्दुजौ मूर्तौ = लग्नस्थौ चेत् उन्मादरोगो सम्भवति ।
५. कृशशशी = क्षीणेन्दुः मन्दश्च रिःफस्थितौ चेत् उन्मादरोगो सम्भवति ।
६. पापयुतः क्षीणेन्दुः लग्न-पञ्चम-अष्टम-नवमस्थितश्चेत् उन्मादरोगो सम्भवति ।
७. पापयुतः मान्दिः अस्ते = सप्तमे विद्यते चेत् उन्मादरोगो सम्भवति।
८. पापयुतः वित् = बुधः त्रि-षष्ठ-अष्टम-अन्त्यगश्चेत् उन्मादरोगो सम्भवति ।

यथोक्तम् –

**लग्नस्थे धिषणे दिवाकरसुतो भौमोऽथवा द्यूनगो**
**मन्दे लग्नगते मदात्मजतपः संस्थो महीनन्दनः ।**
**मूर्तौ मूढशशीन्दुजौ कृशशशी मन्दश्च रिःफस्थितौ**
**पापोपेतकृशामृतांशुरुदयायुः स्वान्तधर्मोपगः॥**
**अस्ते पापयुतो मान्दिर्वित्त्रिषष्ठाष्टमान्त्यगः।**
**उन्माददायिनो योगाः एवमष्टौ समीरिताः॥**[13]

इति ।

एवमेव जातकालङ्कारग्रन्थे अपि कतिचन पित्तजरोगाः निर्दिष्टाः सन्ति । यथा –

- शत्रुभावस्थः चन्द्रः क्रूरग्रहैः दृष्टः, शुभग्रहैः न दृष्टः चेत् जातकः प्लीहवान् स्यात् ।
- एवमेव सप्तमभावे लग्ने वा स्थितश्चन्द्रः क्रूरग्रहैः दृष्टः, शुभग्रहैः न दृष्टः चेत् जातकः प्लीहवान् स्यात् ।
- चतुर्थभावे विद्यमानः शनिः क्रूरग्रहैः दृष्टः, शुभग्रहैः न दृष्टः चेत् जातकः नष्टदृष्टिः भवति ।
- लग्ननाथे दिनकरतनये क्रूरनिष्पीडिते सति प्लीहरोगः भवति। (प्लीहरोगः पित्तविकारेष्वन्यतमः)

यथोक्तम् –

**दृष्टे क्रूरैर्न सौम्यैर्यदि रिपुगृहगे चोडुपे प्लीहवान् स्या-**
**देवं कामाङ्गनाथे तदनु रविसुतस्तुर्यगो नष्टदृष्टिः।**
**प्लीहो स्याल्लग्ननाथे दिनकरतनये क्रूरनिष्पीडिते चेत्**
**सौख्यायुङ्मानवः स्यात्तदनु सदनगे प्लीहवान् हर्षहीनः॥**[14]

इति ।

**आयुर्वेदशास्त्रोक्तरीत्या पित्तजरोगाणां निवाणोपायाः –**

आयुर्वेदशास्त्रे सर्वेषामपि रोगाणां द्विप्रकारकाः चिकित्साः उक्ताः – शमनं शोधनं चेति । शमनरूपचिकित्सायाम् औषधादिकं दत्त्वा शरीरे एव त्रिदोषाणाम् उपशमनं क्रियते, दोषस्य बहिः निष्कासनं न क्रियते। किन्तु शोधनरूपचिकित्सायां दोषस्य बहिः निष्कासनं क्रियते। शमनरूपचिकित्सायां यदि रोगोपशमनं न जातं तर्हि शोधनरूप-चिकित्सा एव करणीया भवति। गुलिकाः, कषायाः इत्यादीनि औषधीयद्रव्याणि शमनरूपचिकित्सायाम् उपयुज्यन्ते। पञ्चकर्म-चिकित्सा एव शोधनरूपचिकित्सा इत्यभिधीयते। पित्तजरोगाणां निवारणार्थं शमनरूपचिकित्सायां घृतं परमौषधं भवति, एवञ्च शोधनरूपचिकित्सायां विरेचनचिकित्सा परमौषधं भवति । यथोक्तम् अष्टाङ्गहृदये –

**शरीरजानां दोषाणां क्रमेण परमौषधम्॥**
**बस्तिर्विरेको वमनं तथा तैलं घृतं मधु।**[15]

इति ।

घृतस्य सेवनं, मधुरशीतैः पदार्थैः औषधैः वा विरेचनं, मधुरतिक्तकषायरसयुक्तानां भोज्यवस्तूनाम् औषधीनां वा उपयोगः, सगन्ध-शीत-हृद्यस्वभावानां गन्धद्रव्याणां घ्राणनं, कण्ठेगुणाख्यानां मालानां मणीनां वा वक्षसा धारणं, कर्पूरचन्दनोशीरैः सुगन्धद्रव्यैः पुनः पुनः देहे अनुलपनम् इत्यादीनि पित्तोपशमनार्थम् उपयुज्यमानाः

चिकित्साविधयः भवन्ति। विशेषेण क्षीरं, घृतं, विरेचनं च पित्तोपशमनाय उपयुज्यन्ते।

तत्र विरेचनार्थं दन्ति, त्रिवृत्, त्रिफला, श्वेतपुष्पा, इन्द्रवारुणी, स्नुही, शङ्खिनी, नलिनी, तिल्वकम्, आरग्वधः, कम्पिल्लकः, हेमदुग्धा, क्षीरं, मूत्रम् – एतानि द्रव्याणि उपयुज्यन्ते। यथोक्तम् अष्टाङ्गहृदये –

**निकुम्भकुम्भत्रिफलागवाक्षीस्नुक्शङ्खिनीनीलिनितिल्वकानि।**
**शम्याककम्पिल्लकहेमदुग्धा दुग्धं च मूत्रं च विरेचनानि॥**[16]

इति ।

**निष्कर्षः –** आयुर्वेदशास्त्रे वातः, पित्तं, कफश्चेति त्रयः दोषाः निर्दिष्टास्सन्ति। तेषु पित्तदोषम् उष्णगुणयुक्तं भवति। अतः उष्णरूपाः सर्वेऽपि रोगाः पित्तजरोगाः भवन्ति। पित्तविकारजन्यरोगाणां कृते घृतम् एवञ्च विरेचनचिकित्सा परमौषधमिति आयुर्वेदशास्त्रे निर्दिष्टाः सन्ति। ज्यौतिषशास्त्रेऽपि प्रश्नकालिकग्रहस्थितिवशात् रोगकारणानां ज्ञानप्रकारः, एवञ्च वात-पित्त-कफकारकग्रहाणाम् वशात् तत्तद्दोषोत्थ-रोगाणां चिन्तनप्रकारः, रोगपरिहारार्थं करणीयाः धार्मिकविधयः च निर्दिष्टास्सन्ति। रोगोपशमनार्थं चिकित्सा, धार्मिकक्रियाः च उभयमपि आवश्यकम् इति ज्यौतिषशास्त्रस्य मतम् । पत्रेऽस्मिन् मया यथामति ज्यौतिष-आयुर्वेदशास्त्रयोः निरूपितरीत्या पित्तजरोगाणां विवेचनस्य लघुप्रयत्नो विहितः। आयुर्वेदशास्त्रे ज्यौतिषशास्त्रे च पित्तजरोगसम्बद्धाः इतोऽपि बहवः विचारास्सन्ति। परन्तु पत्रविस्तरभयात् अत्र दिङ्मात्रं केचन एव विचाराः साररूपेण मया प्रतिपादिताः ।

**सन्दर्भग्रन्थसूची –**


1. **प्रश्नमार्गः – प्रथमो भागः**, ग्रन्थकर्ता – इटक्काट् नम्पूतिरिः, व्याख्याकारः – सुरकान्तझा, चौखम्बा संस्कृत सीरीज आफिस – वाराणसी
2. **प्रश्नमार्गः – द्वितीयो भागः**, ग्रन्थकर्ता – इटक्काट् नम्पूतिरिः, व्याख्याकारः – सुरकान्तझा, चौखम्बा संस्कृत सीरीज आफिस – वाराणसी
3. **बृहज्जातकम्,** ग्रन्थकर्ता – वराहमिहिरः, व्याख्याकारः – केदार-दत्तजोशी, संस्करणम् – सा.यु.२०१३, मोतीलाल बनारसीदास – वाराणसी
4. **अष्टाङ्गहृदयम्;** ग्रन्थकर्ता – वाग्भटः, षष्ठं संस्करणम्, संस्करण-वर्षम् – सा.यु.१९३९, प्रकाशनसंस्था – निर्णयसागरमुद्रणालयः, मुम्बई
5. **आयुर्वेदस्य भाषा संस्कृतं पठ्यताम् – चतुर्थः भागः (अष्टाङ्ग-हृदयम्– १);** द्वितीयमुद्रणम् – सा.यु.२०१९, प्रकाशनसंस्था - संस्कृतसंवर्धनप्रतिष्ठानम्, नवदेहली
6. **आयुर्वेदस्य भाषा संस्कृतं पठ्यताम् – चतुर्थः भागः (अष्टाङ्ग-हृदयम् – २);** द्वितीयमुद्रणम् – सा.यु.२०१९, प्रकाशनसंस्था - संस्कृतसंवर्धनप्रतिष्ठानम्, नवदेहली
7. **आयुर्वेदस्य भाषा संस्कृतं पठ्यताम् – चतुर्थः भागः (अष्टाङ्ग-हृदयम् – ३);** द्वितीयमुद्रणम् – सा.यु.२०१९, प्रकाशनसंस्था - संस्कृतसंवर्धनप्रतिष्ठानम्, नवदेहली
8. **चरकसंहिता – प्रथमो भागः**; ग्रन्थकर्ता – चरकः, व्याख्याकारौ – आचार्यविद्याधरशुल्कः, प्रो. रविदत्तत्रिपाठी च, प्रकाशनसंस्था – चौखम्बासंस्कृतप्रतिष्ठानं, नवदेहली
9. **चरकसंहिता – द्वितीयो भागः;** ग्रन्थकर्ता – चरकः, व्याख्याकारौ – आचार्यविद्याधरशुल्कः, प्रो. रविदत्तत्रिपाठी च, प्रकाशनसंस्था – चौखम्बासंस्कृतप्रतिष्ठानं, नवदेहली
10. **अष्टाङ्गहृदयकोषः;** लेखकः – के. एम्. वैद्यः, प्रकाशनवर्षम् – सा.यु.२०१९, प्रकाशनसंस्था – चौखम्बा सुरभारती प्रकाशनम्, वाराणसी
11. **सुश्रुतसंहिता – प्रथमो भागः;** ग्रन्थकर्ता – सुश्रुतः, प्रकाशनसंस्था – चौखम्भा ओरियन्टालिया, वाराणसी
12. **सुश्रुतसंहिता – द्वितीयो भागः;** ग्रन्थकर्ता – सुश्रुतः, प्रकाशनसंस्था – चौखम्भा ओरियन्टालिया, वाराणसी
13. **सुश्रुतसंहिता – तृतीयो भागः;** ग्रन्थकर्ता – सुश्रुतः, प्रकाशनसंस्था – चौखम्भा ओरियन्टालिया, वाराणसी
14. **जातकालङ्कारः,** https://archive.org/details/in.ernet.dli.2015.312408/mode/ 2up
15. **चमत्काचिन्तामणिः**, ग्रन्थकर्ता – नारायणभट्टः, संस्करणम् – सा.यु.२००७, व्याख्याकारः – रमाशङ्करत्रिपाठी, प्रकाशनसंस्था – चौखम्भा ओरियन्टालिया, दिल्ली


**सन्दर्भग्रन्थः-**

[1] अष्टाङ्गहृदयम् – सूत्रस्थानम् – आयुष्कामीयाध्यायः – श्लोकः १९$\frac{1}{2}$

[2] प्रश्नमार्गः – द्वादशोऽध्यायः – श्लोकः २९

[3] प्रश्नमार्गः – एकादशोऽध्यायः – श्लोकः ४

[4] प्रश्नमार्गः – द्वादशोऽध्यायः – श्लोकः ११

[5] फलदीपिका ८-३४

[6] प्रश्नमार्गः – एकादशोऽध्यायः – श्लोकः २१

[7] प्रश्नमार्गः – एकादशोऽध्यायः – २२, २३ श्लोकौ

[8] प्रश्नमार्गः – एकादशोऽध्यायः – श्लोकः २४

[9] चमत्कारचिन्तामणिः – रवेः भावफलानि – श्लोकः १२

[10] बृहज्जातकम् ४-२०

[11] प्रश्नमार्गः – द्वादशोऽध्यायः – श्लोकः ३७

[12] प्रश्नमार्गः – द्वादशोऽध्यायः – ४६ तः ४९ श्लोकाः

[13] प्रश्नमार्गः – द्वादशोऽध्यायः – ३१, ३२ श्लोकौ

[14] जातकालङ्कारः ३-२५

[15] अष्टाङ्गहृदयम् – सूत्रस्थानम् – आयुष्कामीयाध्यायः – श्लोकः २५, २५$\frac{1}{2}$

[16] अष्टाङ्गहृदयम् – सूत्रस्थानम् – शोधनादिगणसङ्ग्रहः – श्लोकः २


National Journal of
Hindi & Sanskrit Research

**ISSN: 2454-9177**
NJHSR 2024; 1(52): 49-52

www.sanskritarticle.com

**राहुल कुमार शर्मा**
सहायकाचार्यः, योगविज्ञानविभागः,
राष्ट्रियसंस्कृतविश्वविद्यालयः,
तिरुपतिः

**Correspondence:**
**राहुल कुमार शर्मा**
सहायकाचार्यः, योगविज्ञानविभागः,
राष्ट्रियसंस्कृतविश्वविद्यालयः,
तिरुपतिः

# हठयोगप्रदीपिकानुसारं कुम्भकाः

**राहुल कुमार शर्मा**

**शोधनिबन्धसारः**

धर्मार्थकाममोक्षाः चत्वारः पुरुषार्थाः भवन्ति। तत्सम्पादनाय आस्तिकपुरुषः सर्वथा यतते। नास्तिकार्थकामाभ्यां तृप्तो भवति। तथापि तस्य जीवने शान्तिः भवति न वेति निश्चेतुं स्वयं न शक्नोति। आस्तिकः कर्म कुरुते फलं दैवायत्तं निश्चित्य फललाभे दैवमनुकूलमिति तृप्तो भवति। कार्यनाशे देवः नानुकूलमिति विषण्णोऽपि निश्चिन्तो भवति। किन्तु यस्य श्रद्धा सिषाधयिषा भवति सः कार्याद्विफलोऽपि न विरमति। एवं कार्यसाधनार्थं नित्याभियोगः एव योगः। किन्तु मुमुक्षूणां विषये चित्तवृत्तिनिरोधः योगः लौकिकव्यवहारे भगवदुक्तदिशा **'योगः कर्मसु कौशलम्'।** गीतासु उपदिष्टः एषोऽर्थः कार्यसाधने ऐहिकस्य आमुष्मिकस्य वा कार्यस्य साधको भवति।

मानवजीवने साफल्यमाप्तुं योगमार्गः आनुसरणीयः। तदुक्तं योगसूत्रे **-'अथ योगानुशासनम्'** इति। **'योगः चित्तवृत्तिनिरोधः'** इति द्वितीयसूत्रेण योगस्य निरूपणं कुर्वन् चित्तवृत्तिनिरोधस्य महत्त्वं प्रयोजनं च प्रतिपादितमाचार्येण भगवता पतञ्जलिना। मानवस्य सर्वाणि कार्याणि चित्तं = मनः प्रभावयति। अतः मनसः नियन्त्रणं नितान्तम् आवश्यकम्। नियन्त्रितमनसा कार्यकरणे जीवने सफलता लभ्यते। चित्तवृत्तिनिरोधः प्राणायामेन सम्भवतीति योगशास्त्रे निरूपितः। प्राणायामप्रतिपादकग्रन्थेषु हठयोगप्रदीपिका प्राचीना अन्यतमा चास्ति। अतः एतद्ग्रन्थानुसारं प्राणायामः, तद्भेदाः, प्राणायामक्रिया तत्फलं च यथाग्रन्थं विविच्यते।

**कठिनशब्दाः** – हठः, योगः, प्राणायामः, आसनम्, रेचकः, कुम्भकः, पूरकः, सूर्यभेदनम्, उज्जायिनी, सीत्कारी, शीतली, भस्त्रिका, भ्रामरी, मूर्च्छा, प्लावनी।

## भूमिका

भारतीयाः त्रिवर्गादपि मोक्षे श्रद्धधानाः भवन्ति। त्रिवर्गे श्रद्धधानाः धर्मोत्तराः भवन्ति। त्रिवर्गेण समं मोक्षः साध्यः इति येषाम् अभिलाषा। ते मोक्षोपायेषु कःप्रशस्तः इति अन्विष्यन्ति। वेदान्तमार्गः दुर्भेद्यः निर्गुणो ब्रह्मोपासनं सर्वेषां न साध्यम्। भक्तिमार्गः सुलभोऽपि सुस्थिरमनस्कानां भक्तिरेव फलदायिनी भवति। तदुक्तं श्रीमद्भगवद्गीतायाम् -

**अनन्याः चिन्तयन्तो मां ये जनाः पर्युपासते।**
**तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यम्।।**[1]

योगः अलब्धलाभः, क्षेमं लब्धस्य रक्षणं, तत्र अनन्यशब्दः बह्वर्थकः अन्यचिन्ता, अन्यदेवासक्तिः, अन्यविषयचिन्ता इत्यादि भगवद्भिन्नाः सर्वे अन्यशब्दवाच्याः। एवम् अनन्यचिन्तासाधनाय चित्तवृत्तिनिरोधः कार्य एव, तादृशचित्तवृत्तिनिरोधः एव योगः। भक्तिज्ञानवैराग्येषु अन्यतमः। इतरद्वयस्य निमित्तं भवति योगस्तु त्रितयस्यापि कारणं भवति। योगोऽपि क्रियायोगः, हठयोगः इति मुख्यतया द्विधो भिन्नः। इतरेषां योगभेदानां सत्वेऽपि ते न प्रसिद्धाः। क्रियायोगः हठयोगापेक्षया सात्विकोऽपि दीर्घेन कालेन साध्यो भवति। हठयोगाचरणं साध्यम्। लोके हठशब्दः दुराग्रहः इत्यर्थे रूढः।

किन्तु योगदर्शनविषये स्थिराभिनिवेशः इति ग्राह्यः। हकारः सूर्यः, ठकारः चन्द्रः तयोः योगः हठः इति वैचित्री विद्वत्कल्पिता। एवं योगदर्शने हठयोग शाखायाः बहवो ग्रन्थाः लभ्यन्ते। अद्यतनकाले नूतनतया प्रकाशिताश्च लभ्यन्ते। हठयोगग्रन्थेषु स्वात्मरामयोगी विरचिता हठयोगप्रदीपिका प्राचीनतमा।

**हठयोगप्रदीपिकाग्रन्थकर्तुः परिचयः**

हठयोगप्रदीपिकाग्रन्थः हठयोगप्रतिपादकग्रन्थेषु प्राचीनतमः। हठयोगप्रतिपादकेषु ग्रन्थेषु प्रायशः सर्वेषु प्रदीपिकायाः प्रस्तावः दृश्यते। प्रदीपिका प्रामाण्यरूपेण दर्शिता च। हठयोगग्रन्थेषु हठयोगप्रदीपिका सर्वप्रथमा। ग्रन्थस्यास्य कर्ता स्वात्मारामयोगी एकादशशतके आसीदिति केषाञ्चिन्मतम्। हठयोगप्रदीपिकायाम् उपदेशनामकाः चत्वारः अध्यायाः वर्तन्ते। तत्र आहत्य ३८८ श्लोकाः वर्तन्ते। अयं ग्रन्थः आकारेण लघीयान् अपि गौरवेण गरियान्।

**हठयोगः**

योगेषु प्रसिद्धोऽयं योगः हठयोगः। तन्त्रशास्त्रमूलोऽयं योगप्रकारः। अतएव शारीरकाभ्यासविशिष्टाः शरीरगतशक्तिजागरणविषयकाः कुण्डलिनी-नाडी-चक्रादि विषयाः, मुद्राषट्कर्मकुम्भकादि विषयाः च अनेन हठयोगेन प्रतिपादिताः। तदेव मीमांस्यते। हठो नाम सूर्यचन्द्रयोः संयोगः। वस्तुतः हकारेण सूर्यः, रविः,यमुना, शक्तिः, रजः, प्राणः, पवनः, अधः पिङ्गलानाडी च गृह्यते। ठकारेण चन्द्रः, शशिः, गङ्गा, शिवः, बिन्दुः, अपानः, मनः, ऊर्ध्वम् इडानाडी च गृह्यते। तस्य हठयोगस्य परिभाषाः ग्रन्थेषु उपलभ्यन्ते। यथा-

**हकारेण तु सूर्यः स्यात् ठकारेणेन्दुरुच्यते।**
**सूर्यचन्द्रमसोरैक्यं हठ इत्यभिधीयते।।**
**हठेन ग्रस्यते जाड्यं सर्वदोषसमुद्भवः।**
**क्षेत्रज्ञः परमात्मा च तयोरैक्यं तदाभवेत्।।**[2]

हठयोगप्रदीपिकायाः ज्योत्स्नाटीकायां तु-

**हकारो कीर्तितः सूर्यः ठकारो चन्द्र उच्यते।**
**सूर्यचन्द्रमसोर्योगात् हठयोगो निगद्यते।।**[3]

**आसनम्-'स्थिरसुखमासनम्'**[4]

येन अनुष्ठितेन शारीरकं स्थैर्यं सुखं च सम्पद्यते तदेव आसनम्। आसनानां कतिपयेषां गणनां कृत्वा प्रयत्नः शैथिल्यम् इति द्वयोराचरणेन आसनानाम् आनत्यं भवति इत्यपि इतरासनगणनेऽपि अनुग्रहो दर्शितः। व्यासभाष्ये एकादशासनानां नामनिर्देशो कृतः।

आसनेन द्वन्द्व अनभिघातः भवति। द्वन्द्वराहित्यार्थं तस्मिन् सत्यपि वा बाह्यस्य आसने वायोः आदानं श्वासः, निस्सरणं प्रश्वासः। श्वासप्रश्वासयोः नियमनार्थं प्राणायामः करणीयः।

**प्राणायामः**

प्राणवायोः स्थैर्यकरणं प्राणायामः कथ्यते। सः च चतुर्विधो भवति। 1.रेचकः, 2.पूरकः, 3.कुम्भकः, 4.केवलकुम्भकः इति। तत्र कुक्षिस्थवातयोर्बहिः निःसारणं रेचकः।

**बाह्य वायुमाकृष्य देहाभ्यन्तरेऽवस्थापनं पूरकः।**
**उभयगतिनिरोधः कुम्भकः।**
**सर्वेषां मेलकं केवलकुम्भकं च प्रोच्यते।।**[5]

तत्र द्वादश-षोडश-द्वात्रिंशत्-चतुःषष्ठी मात्राभिः पूरकादयो भवन्ति। तथा च त्रिभिः रेचक-कुम्भकपूरकैः शनैः शनैः प्राणवायौ आधिपत्यं स्थापनं प्राणायामः। मनसा वायोः साक्षात् सम्बन्धः। अतएव प्राणवायौ वशीभूते मनः स्वयमेव वशीभवति।

प्राणायामः श्वासानां व्यायामोऽस्ति। आलस्यं, मूढता शारीरिक-दौर्बल्यादयो विघ्नाः विशो प्राणायामैः दूरीभवन्ति। योगसाधनायां प्राणायामस्य विशिष्टं स्थानमस्ति। शारीरिकदृष्ट्या प्राक्तनयोगिनः प्राणायामस्य पर्याप्तं महत्त्वं अददन्। प्राणायामकत्रृर्णां शरीरस्य स्वास्थ्याय मलशोधकक्रियाणाम् आवश्यकतैव भवति। प्राणायामैः शरीरं तेजस्वी भवति, मानसिकसमतायाः प्राणायामैः सहायको भवति। मनोविकाराः मानसिकशक्तिभङ्गस्य प्रबलाः सन्ति हेतवः। प्राणायामसाधकाः मनोविकारान् दूरीकृत्य मानसिकीं समतां स्थापयितुं समर्थाः भवन्ति। अतो मनोविकारान् दमयितुं मानसिकशारीरकसमताप्राप्तये च प्राणायामो महानस्ति साधकः। प्राणायामस्य कौशलपूर्णप्रक्रियानुष्ठानेन प्राणायामक्रियागतिविच्छेदे संवृत्ते साधकस्यान्तः करणं स्थैर्यमासाद्य बाह्याभ्यन्तरविशुद्धिता प्रपद्यते। प्राणायामशुद्धौ सत्यां प्राणायामगतिरोधेन प्राणवायौ सुस्थिरे मनसो वायोश्चान्योऽन्यसम्बन्धात् अन्तःकरणं स्थिरत्वमासादयति। वृत्तीनां स्थैर्यान्मलापसरणेन बुद्धिर्निर्तरां प्रकाशते।

प्राणायामसाधनादर्वाग् योगी केवलं बहिर्गत्यैव बम्भ्रम्यते। किन्तु प्राणायामसिद्ध्या साधको मनोराज्यरूपेऽन्तर्जगत्यपि स्वाधिकारं स्थापयति। प्राणायामः प्रत्याहारस्य न केवलं साहाय्यमनुतिष्ठते प्रत्युतः मनोयोग्यतामुन्नयन् धारणायामपि सहायको जायते।

**कुम्भकावसरः**

प्राणायामसिद्धये विचित्रान् कुम्भकान् अभ्यसेत्। पूरणानन्तरं जालन्धरबन्धनामकः बन्धः कार्यः। अधः कुञ्चनेन कण्ठसङ्कोचनेन पश्चिमतानेन प्राणाः क्षिप्रं सुषम्णां विशन्ति । अपानम् ऊर्ध्वं प्रेरयित्वा प्राणान् अधो नयेत्। ततः जराविमुक्तः षोडशवर्षवयस्कः इव युवा प्रतिभाति।

**अपानमूर्ध्वमुत्थाप्य प्राणकण्ठादधो नयेत्।**
**योगी पराविमुक्तस्सन् षोडशाब्दवयो भवेत्।।**

**हठयोगप्रदीपिकाग्रन्थोक्तकुम्भकाः**

**1.सूर्यभेदनम्**

सुखप्रदे आसने स्थितः योगी दक्षिणनाड्येन वायुं पूरयित्वा शनैः निस्सारयेत्। केशेभ्यः आरभ्य नखपर्यन्तं यावत्कालं निरोधो भवति तावत्कालं कुम्भकं कृत्वा रेचनं कारयेत्। व्याख्यायां तत्प्रकारः एवं दर्शितः।

**आसने सुखदे योगी बध्वा चैवासनं ततः।**
**दक्षनाड्या समाकृष्य बहिस्थं पवनं शनैः।।**
**आकेशादानखाग्राच्च निरोधावधि कुम्भयेत्।**

**ततश्शनैस्सव्यनाड्या रेचयेत्पवनं शनैः।।**

व्याख्याश्लोकः- **हठान्निरुद्धः प्राणोऽयं रोमकूपेषु निस्सरेत्।**
**देहं विदारत्येषु कुष्ठादि जनयत्यपि।।**
**ततः प्रत्यापितव्योऽसौ क्रमेणारण्यहस्तिवत्।**
**वन्योगजो गजारिर्वा क्रमेण मृदुतामयात्।।**
**करोति शास्त्रनिर्देशान् न च तं परिलङ्घयेत्।**
**तथा प्राणो हृदिस्थोऽयं योगिनां क्रमयोगतः।**
**गृहीतस्सेव्यमानस्तु विस्रम्भमुपगच्छति।।**[6]

**सूर्यभेदनफलम्**

कपालशोधकम् अशीतिभेदवातदोषनिवृत्तिकरं कृमिदोषहरं च सूर्यभेदेन कुम्भकं भवति।

**कपालशोधनं वातदोषघ्नं कृमिदोषहृत्।**
**पुनः पुनरिदं कार्यं सूर्यभेदनमुत्तमम्।।**[7]

**2.उज्जायिनीकुभकः**

एष एव उज्जायी इति पुंलिङ्गेनापि उदाहृतः। मुखं संवृतं कृत्वा इडापिङ्गलाभ्यां वायुमाकृष्य कण्ठमार्गेण यथा ध्वनियुक्तं हृदयावधिं प्रविशति, तथा पूरयित्वा नखकेशादि, व्याप्तिपर्यन्तं कुम्भकं कृत्वा इडया रेचयेत्। एषः कुम्भकः श्लेष्मदोषहरः जठराग्निवर्धकः, जलोदररोग नाशकः च। गच्छत तिष्ठत वापि करणीयः।

**मुखं संयम्य नाडीभ्यामाकृष्य पवनं शनैः।**
**यथालगतिकण्ठात्तु हृदयावधि सस्वनम्।।**
**पूर्ववत्कुम्भयेत्प्राणं रेचयेदिडया ततः।**
**श्लेष्मदोषहरं कण्ठे देहानलविवर्धनम्।।**
**नाडीजलोदरधातु गददोषविनाशनम्।**
**गच्छता तिष्ठता कार्यमुज्जाय्याख्यं तु कुम्भकम्।।**[8]

**3.सीत्कारीकुम्भकः**

जिह्वां द्रोणिमिव कृत्वा ओष्टयोः मध्ये स्थापयित्वा वायुं पूरयेत्। ततः पूर्ववत् कुम्भकं कृत्वा घ्राणेन रेचयेत्। अस्यानुष्ठानेन मन्मथः इव सुन्दरः भवति, क्षुत्, तृट्, बाधा, निद्रा, आलस्यं न बाधते। देहस्थाः सर्वे उपद्रवाः नश्यन्ति।

**सीत्कां कुर्यात्तथा वक्त्रे घ्राणे नैव विजृम्भिकाम्।**
**एवमभ्यासयोगेन कामदेवो द्वितीयकः।।**
**योगिनीचक्रसामान्यः सृष्टिसंहारकारकः।**
**न क्षुधा न तृषा निद्रा नैवालस्यं प्रजायते।।**
**भवेत्सत्त्वं च देहस्य सर्वोपद्रव वर्जितः।**
**अनेन विधिना सत्यं योगीन्द्रो भुवि मण्डले।।**[9]

**4.शीतलीकुम्भकः**

ओष्ठौ सम्पुटी कृत्य पुरो नीत्वा जिह्वया वायुमाकृष्य पूर्ववत् कुम्भकं कृत्वा नासिकारन्ध्राभ्यां शनैः रेचयेत्। अनेन गुल्मप्लीहादिकाः रोगाः ज्वरपित्तादयो दोषाः नष्टाः भवन्ति।

**जिह्वया वायुमाकृष्य पूर्ववत्कुम्भसाधनम्।**
**शनकैः घ्राणरन्ध्राभ्यां रेचयेत्पवनं सुधीः।।**
**गुल्मप्लीहादिकान् रोगान् ज्वरं पित्तं क्षुधां तृषाम्।**
**विषाणि शीतनीलाम कुम्भिकेयं निहन्ति हि।।**[10]

**5.भस्त्रिकाकुम्भकः**

भस्त्रिकाचरणात् प्राक् पद्मासने स्थितः समग्रीवोदरो भूत्वा मुखं संवृतं कृत्वा एकेन घ्राणरन्ध्रेण वायुमाकृष्य रेचयेत्।

**ऊर्वोपरि संस्थाप्य शुभे पादतले उभे।**
**पद्मासनं भवेदेतत्सर्वपापप्रणाशनम्।।**
**सम्यक्पद्मासनं बध्वा समग्रीवोदरं सुधीः।**
**मुखं संयम्य यत्नेन प्राणं घ्राणेन रेचयेत्।।**[11]

**रेचनपूरकस्थितिः**

भस्त्रिकाचरणं पूर्वेभ्यः क्लिष्टतरम्। अतः तदाचरणं कालावधिः पूरकान्तरकृत्यं इत्येते विषयाः त्रिभिः श्लोकैः पृथगुदाहृताः। हृदये कण्ठे च सशब्दं वायुः प्रविशति तदा वेगेन पूरयेत्। एवं वेगेनैव रेचकमपि कुर्यात्। एवं भस्तामिव स्वशरीरं चालयेत् सञ्जाते श्रमे इडानाड्या पूरणं कुर्यात्। तदा शरीरं लघु भवति। मध्यमेन तर्जन्या नासिकां बध्वा कुम्भकं रेचकं च कुर्यास्ताम्। भस्त्रिकया वातपित्तश्लेष्मादयः सर्वे दोषाः नष्टाः भवन्ति। ब्रह्मग्रन्थिः, विष्णुग्रन्थिः, शिवग्रन्थिरिति ग्रन्थित्रयमपि भिन्नं भवति।

**धारयेन्नासिकां मध्यतज्जनीभ्यां विना दृढम्।**
**विधिवत्कुम्भकं कृत्वा रेचयेदिडयाऽनिलम्।।**
**वातपित्तश्लेष्महरं शरीराग्निविवर्धनम्।।**
**कुण्डलीबोधकं क्षिप्रं पावनं सुखदं हितम्।**
**ब्रह्मनाडीमुखेसंस्थ कफाद्यर्गलनाशनम्।।**[12]

**6.भ्रामरीकुम्भकः**

भ्रमरध्वनिरिव वर्तमानेन शब्देन पूरणं कृत्वा भ्रमरी ध्वनितुल्येन ध्वनिना रेचनं कुर्यात्। ततः निर्विशेषः आनन्दो भवति।

**वेगाद्धोषं पूरकं भृङ्गनादं भृङ्गीनादं रेचनं मन्दमन्दम्।**
**योगीन्द्राणामेवमभ्यासयोगाच्चित्ते जाता काचिदानन्दलीला।।**[13]

**7.मूर्च्छाकुम्भकः**

जालन्धरबन्धेन पूरणं कृत्वा शनैः रेचयेत् एषैव मुर्च्छा।

**पूरकान्ते गाढतरं बध्वा जालन्धरं शनैः।**
**रेचयेन्मूर्च्छनाड्येयं मनो मूर्च्छा सुखप्रदा।।**[14]

**8.प्लावनी**

शरीरे वायुपूर्णे कुम्भककरणेन जलान्तः प्रविष्टः इव अगाथेऽपि सुखं प्लवते।

**अन्तः प्रवर्तितोदार मारुता पूरितोदरः।**
**पयस्यगाधोऽपि सुखात् प्लावते पद्मपत्रवत्।।**[15]

एवंरीत्या हठयोगप्रदीपिकायाम् अष्टौ कुम्भकाः प्रतिपादिताः। किञ्च उपर्युक्तविषयाणां विवेचनेन ज्ञायते यत्- मानवजीवने

प्राणायामस्य महत्त्वं सुतरामस्त्येव। सर्वविधसाफल्यं प्राप्तुं प्राणायामः प्रत्यहं करणीयः। एतेषाम् अभ्यासेन चित्तवृत्तिनिरोधः सम्भवति। चित्तवृत्तिनिरोधेन मनः स्थिरं भवति। सुस्थिरमनसा क्रियमाणानि कार्याणि सफलतां प्रापयन्ति। मनसि सत्त्वोद्रेकः जायते। मनसि अधर्मभावना नैव उदेति। सर्वत्र सुखं शान्तिः च प्रसरिष्यतः। अतः प्रत्येकं जनैः कुम्भकानाम् अभ्यासः करणीयः।

**उपसंहारः**

प्राणायामेन कुण्डलिनीबोधः, कुण्डलिनी बोधेन राजयोगफलमपि लभते। सुषुम्ना निरर्गला भवति। इत्यादि प्राणायामप्रयोजनं प्रदीपिकायां चतुर्भिः श्लोकैः द्वितीयोपदेशान्ते निरूपितम्।तदेव फलं हठतत्त्वकौमुद्यां प्रकीर्णरूपतया सर्वत्र ग्रन्थे बहुधा प्रतिपादितम्। प्रदीपिकायां दृष्टाश्च श्लोकाः क्वचिन्नामनिर्देशेन, क्वचित्तद्विना कौमुद्यां गृहीताः हठयोगप्रदीपिकायां यथा -

**वपुः कृशत्वं वदने प्रसन्नता**
**नादस्फुटत्वं नयने सुनिर्मले।**
**अरोगता बिन्दुजयोऽग्निदीपनं**
**नाडीविशुद्धिर्हठयोगलक्षणम्।।**[16]

**उपयुक्तग्रन्थसूची**

1.पातञ्जलयोगदर्शनम्-चौखम्बा संस्कृतभवनम्,वाराणसी - 2014
2.पातञ्जलयोगप्रदीप(हिन्दीभाषायाम्)-गीताप्रेस्, गोरखपुर् -1966
3.पुराणेतिहासयोःसांख्ययोगदर्शनविमर्शः- श्रीकृष्णत्रिपाठी, सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः, वाराणसी, 1979
4.महाभारतम् - ओरियेण्टल् रीप्रिन्ट कार्पोरेषन्, दिल्ली - 1980
5.हठयोगप्रदीपिका (ब्रह्मानन्दविरचितज्योत्स्नाटीका) - श्रीवेङ्कटे-श्वर स्टीम् प्रेस्, मुम्बाई - 1874
6.हठयोगप्रदीपिका ज्ञानदीपव्याख्यासहिता (आन्ध्रभाषायाम्) – कलारत्नाकर मुद्राक्षरशाला, मद्रास-1910
7.हठतत्त्वकौमुदी- The LonavlaYoga Institute, Maharastra (India), Lonavla-2012
8.श्रीमद्भगवद्गीता - सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः, वाराणसी-1990
9.सिद्धान्तकौमुदी-निर्णयसागर प्रेस्,मुम्बाई - 1933

**सन्दर्भग्रन्थः-**

[1] श्रीमद्भगवद्गीता,9/22 श्लोकः
[2] योग.शि.,1/133,134 श्लोकः
[3] हठ.प्र.,ज्योत्स्नाख्याख्या,9/9
[4] पात.सा.,46
[5] पुरा.सां., पृ.सं.140,141
[6] हठ.प्र.,2/48,49 श्लोकाः
[7] हठ.प्र.,2/50 श्लोकः
[8] हठ.प्र.,2/51,52,53 श्लोकाः
[9] हठ.प्र.,2/54,55,56 श्लोकः
[10] हठ.प्र.,2/57,58 श्लोकः
[11] हठ.प्र.,2/59,60 श्लोकाः
[12] हठ.प्र.,2/64,65,66 श्लोकाः
[13] हठ.प्र.,2/68 श्लोकः
[14] हठ.प्र.,2/69 श्लोकः
[15] हठ.प्र.,2/70 श्लोकः
[16] हठ.प्र.,2/78




National Journal of
Hindi & Sanskrit Research

ISSN: 2454-9177
NJHSR 2024 1(52): 57-60

www.sanskritarticle.com

आरती
शोधच्छात्रा, फलितज्योतिषविभागः,
श्री.ला.ब.शा.रा.सं.विश्वविद्यालयः,
नवदेहली

Correspondence:
आरती
शोधच्छात्रा, फलितज्योतिषविभागः,
श्री.ला.ब.शा.रा.सं.विश्वविद्यालयः,
नवदेहली

# वास्तुशास्त्रे भवननिर्माणाय भूमिचयनविधिः

आरती

संसारं गूढरहस्यानां सागरमस्ति। वर्तमानयुगे विश्वस्य बहूनि रहस्यतत्त्वानि ज्ञानानि च समुपस्थानि सन्ति। परन्तु बहूनि अज्ञातरहस्यतत्त्वानि सन्ति येषामन्वेषणमद्यापि प्रवाहवत्प्रचलति। मानवाः सर्वेषु प्राणिषु चिन्तनशीलाः, जिज्ञासवः, अन्वेषणात्मकप्रकृतिकाश्च समुपस्थानि भवन्ति। ते न केवलं प्रकृतौ निहितविविधरहस्यं प्रति आकृष्टाः भवन्ति, अपितु प्रकृतेः विविधरहस्यानि अपि मनुष्याणामादर्शजीवनस्य मार्गं प्रशस्तं कुर्वन्ति। प्रागैतिहासिककालाद् वर्तमानकालपर्यन्तं मानवविकासस्य मुख्यकारणं मनुष्यस्य गवेषणा एवास्ति। सर्वेषां जीवानां जीवनं भूमिः, जलम्, अग्निः, आकाशः, वायुश्चेतेषां पञ्चानां तत्त्वानां समन्वयमेवास्ति तथा च एतेषां पञ्चानां तत्त्वानां कृते आकर्षणभावना अपि सर्वेषु जीवेषु वर्तते। भूमि-जल-अग्नि-वायु-तत्त्वानि मानवजीवनाय अत्यावश्यकानि सन्ति, परन्तु आकाशस्याकर्षणं न केवलम् आकाशस्तरस्य क्षितिजवर्णस्य च कारणाद् अपितु आकाशे विद्यमानानां विविध-आकाश-तत्त्वानां कारणादपि भवति।तेषु आकाशतत्त्वेषु विविधनामानि सन्ति– यथा - आकाशगङ्गाः, तारासमूहाः, ग्रहाः, नक्षत्रसमूहाः, उपग्रहाः, धूमकेतवः, उल्कापिण्डाश्चेत्यादयः सन्ति । वस्तुतः यत्र ग्रह-नक्षत्र-तारका-आकाशगङ्गा-उल्का-धूमकेतु-दैत्य-मानव-देवप्रभृतयः सर्वेजीवाः पृथिव्यादयश्चतुर्दशलोकाश्च समन्वितरूपेण विद्यन्ते, तद् ब्रह्माण्डम् इति कथ्यते।[1] विश्वस्य सर्वेषां तत्त्वानामाधारः सूर्यादिसदृशतारकाः सन्ति तथा च एतेषां सर्वेषामध्ययनस्य तेषां स्वरूपज्ञानस्य च प्रथमः आधारः वेद एव वर्तते।वेदानां गूढरहस्यानामवगमनायवेदङ्गस्य व्यवस्था कृता वर्तते।यस्य षड् विभागाः भवन्ति- शिक्षा, कल्पः, व्याकरणं, निरुक्तं, ज्योतिषशास्त्रं, छन्दश्चेति। एतेषु सर्वेषु अङ्गेषु ज्योतिषशास्त्रं तादृशं वेदाङ्गमस्ति येन माध्यमेन आकाशे गतिमानविविधखगोलीयपिण्डानां तथा च पृथिव्यां निवसतां जीवानां च विशेषतः मानवजीवने प्रभावस्य मूल्याङ्कनं, विश्लेषणं, फलकथनञ्च भवति। लगधऋषिःषडङ्गेषु चक्षुर्रूपेण ज्योतिषशास्त्रस्य महत्त्वपूर्णस्थानमुक्तवान्।[2]

ज्योतिषशास्त्रं विश्वस्य प्राचीनतमं च विज्ञानम् अस्ति। न केवलं पूर्णविज्ञानम् अपितु सर्वेषां विज्ञानानांजनकोऽपि वक्तुं शक्यते। व्युत्पत्तेर्दृष्ट्या द्युत्-धातोः इसुन्-प्रत्ययसंयोगेन ज्योतिस्-शब्दो निष्पन्नो भवति यस्यार्थो भवति-ज्योतिः, प्रकाशः, कान्तिः, प्रभा, दीप्तिः, विद्युत्, आकाशीयपिण्डाश्च।[3] ज्योतिस्-इत्यत्र अन्तसकारस्य मूर्धन्यादेशे 'अच्'प्रत्यये कृते सति 'ज्योतिषः' इति शब्दः पुंलिङ्गे प्राप्यते।[4] एतद् तादृशं वेदाङ्गं यद् ग्रहगतिः बोधकशास्त्रमिति उच्यते। अर्थात् ज्योतिषशास्त्रं ग्रहाणाम् आकाशपिण्डानाञ्च विषये विवेचनं करोतीति। सूर्य-चन्द्रादिग्रहनक्षत्रादय आकाशपिण्डाः सन्ति। प्राचीनमान्यतानुसारं जगतः जड-चेतनजीवानां विकासे, विविधक्रियाणां नियमने, नियन्त्रणे च एतेषां ग्रहनक्षत्राणां महद् योगदानम् अस्ति। ज्योतिषशास्त्रं सूर्यचन्द्रग्रहनक्षत्राणाम् आकाशपिण्डानाञ्च व्याख्यानस्य रहस्यज्ञानस्य च विज्ञानमस्ति। अस्मिन् सन्दर्भे देवर्षिनारदेन[5] उक्तं यद् ज्योतिषशास्त्रम् वेदसम्बद्धत्वाद्वेदाङ्गमिति उच्यते, तस्य कार्यं च जगतः शुभाशुभफलस्य पूर्वानुमानं भवति।

महर्षिवेदव्यासस्य[6] मते यद् इन्द्रियाणां परे अस्ति, तेषामिन्द्रियपराणां येन माध्यमेन भूतभविष्यफलादीनां विवरणं ज्ञायते तदेव ज्योतिषशास्त्रम्। स्वयं ब्रह्मा एव महर्षिपराशराय ज्योतिषस्य ज्ञानं प्रदत्तवान्, तदनन्तरम् अस्य शास्त्रस्य अद्वितीयव्याख्यां कृत्वाएतादृशं विशेषस्वरूपं प्रकाशितवान्।[7] नेमिचन्दशास्त्रिमहोदयानुसारं सूर्यदादिग्रहाणां, कालस्य च विषये बोधकारकं विज्ञानं ज्योतिषशास्त्रम् इति भवति।[8]

अत एव विविधविदुषां मतानाम् आलोके वक्तुं शक्यते यज्ज्योतिषशास्त्रं विशिष्टं प्राचीनतमं च विज्ञानम् इति यद् ग्रहनक्षत्रादीनाम् आकाशीयपिण्डानां मानवजीवनेन सह सम्बन्धं स्थापयति तथा चमानवजीवनस्य अदृष्टभविष्यफलानां शुभाशुभघटनानाञ्च विषये विवेचनं करोति।

आदिकालादेव मानवाः स्वनिवासस्थाननिर्माणे तत्परा आसन्। प्राचीनसाहित्ये दृष्टिपाते कृते सतिज्ञायते यन्मानवानां प्रथमावासो वनस्थलीसु आसीत्। शनैः शनैः विकासक्रमे गृहनिर्माणस्य कला वनवासादागत्यभव्यप्रासादनिर्माणं यावत् विकासं प्राप्नोत्। विकासस्यक्रमेऽस्मिन् मनुष्याणांसहस्रवर्षाणि व्यतीतानि। भवननिर्माणस्य प्रक्रियायाः प्रथमदर्शनं मत्स्यपुराणे भवति। अस्माकम् ऋषि-मुनीनां साधना, तपः, ज्ञानञ्चेत्यादीनां कारणात् सम्प्रति आध्यात्मिकवैज्ञानिकदृष्टियुक्तमद्भुतं ज्ञानमुपलब्धमस्ति। भारतीयपरम्परायाम् ऋषयः अनुभवाधारेण भौतिकोन्नत्या सह आध्यात्मिकपक्षस्यापि समावेशो भवति। जीवने भवननिर्माणंमहत्त्वपूर्णा प्रक्रिया वर्तते। अत एव सुखसमृद्ध्यर्थंभवननिर्माणं योजनाबद्धेन विधि-विधानेन च भवेत्। वास्तुशास्त्रविधिम् अनाश्रित्य निर्मिते भवने निवासेन मनुष्याणां शारीरिककष्टं, मानसिकदुःखञ्च भवति। अतो भवननिर्माणसमये गम्भीरतापूर्वकं वास्तुविधिविधानानां चिन्तनं भवेत्।

स्वेच्छानुसारंकस्यचित् स्थानस्य ग्रामस्य वा निवासहेतुचयनम् अतिहानिकारकमपि भवितुमर्हति।यतो हि प्रत्येकजनस्य कृते सर्वं स्थानं, ग्रामः, दिशा वा निवासस्य दृष्ट्या उपयुक्तो नैव भवति। वास्तुशास्त्रेषु पुराणेषु च भवननिर्माणविधिः सहजसुलभो वर्तते। भवननिर्माणात्पूर्वं वास्तुशास्त्रीयविषयेसम्यक् चिन्तनं भवेत्। भूमि (स्थान) चयनविषयो मानसारे, मयमते, शिल्परत्नादिग्रन्थेषु च विशेषरूपेण विवेचितो वर्तते। 'वास्तुरत्नाकरे' अस्मिन् विषयेलिखितम्-

**ग्रामादेरनुकूलत्वं दिशो भूतग्रहस्य च।**
**गृहधिष्ण्यादिकं शुद्धं वीक्ष्यायव्ययमंशकान्॥**[9]

अर्थात् प्रथमाग्रामस्यानुकूलता, ततः दिशानुकूलता, परं भूमेः अनुकूलता, तत्पश्चाद् गृहस्य पिण्डानयनं, आयः, वारः, नक्षत्रादीनाञ्च शास्त्रानुसारं विचारंकृत्वा भवननिर्माणं कुर्यात्। अत एव अत्र भूमिचयनविषये विवेचनं क्रियते-

**भूमिचयनविधिः-**

चतुर्षु वर्णाश्रमेषु गृहस्थाश्रमस्य स्थानं श्रेष्ठमस्ति। अस्याश्रमस्य सम्बन्धः गृहस्थेन गृहेण च सार्धं भवति। गृहस्थ अर्थात् गृहे यो निवसति, गृहस्थस्य सर्वकार्याणि शुभाशुभकार्याणि गृहमाध्यमेनएव सम्भवति। अतो भवननिर्माणाय तादृशस्य स्थानस्य चयनंकुर्यात् यत्र मनुष्यःस्वजीवनं सुखमयरूपेण व्यतीतंकरोति। प्राकृतिक-कृत्रिमबाधारहितस्थानमेव निवासाय उत्तमं भवति। यथा बुद्धिमान् पुरुषः सचिवगृहसमीपे, धूर्तस्य गृहसमीपे, देवालये, चतुष्पथे च भवननिर्माणं नैव कर्तव्यम्।यतो हि अनेन अर्थस्य पुत्रस्य च हानिर्भवति तथा चापकीर्तिं प्राप्नोति। यथोक्तम्-

**सचिवालयेऽर्थनाशो धूर्तगृहे सुतवधः समीपस्थे।**
**उद्वेगो देवकुले चतुष्पथे भवति चाकीर्तिः॥**[10]

एतदेव चिन्तनं 'मत्स्यपुराणे' अपि बाधा- दुःख- शोक- भयादीनां वर्णनमुपलभ्यते-

**न देव धूर्तसचिवचत्वराणां समीपतः।**
**कारयेद् भवनं प्राज्ञो दुःखशोकभयं ततः॥**[11]

बृहत्संहितायामपि उपर्युक्तदोषाणां सचिवालयस्य धूर्तालयस्य चातिरिक्तानामन्यानां दोषाणां वर्णनं प्राप्यते। यस्यानुसारं सचिवालय-धूर्तालय-देवालय-चतुष्पथप्रभृतीनामतिरिक्तं चैत्यवृक्षः, वल्मीकयुक्तः, गर्तयुक्तः, कूर्मकारस्थानयुक्तश्चादिषु भवननिर्माणे सति दोषो भवति। यथा-

**सचिवालयेऽर्थनाशो धूर्त्तगृहे सुतवधः समीपस्थे।**
**उद्वेगो देवकुले चतुष्पदे भवति चाकीर्त्तिः॥**
**चैत्ये भयं गृहकृतं वल्मीकश्वभ्रसङ्कुले विपदः।**
**गर्त्तायां तु पिपासा कूर्माकारे धनविनाशः।।**[12]

अर्थाद् भवनसमीपे सचिवालये सति अर्थहानिः, धूर्तगृहसमीपे पुत्रवधः, देवस्थाननिकटे उद्वेगः, चतुष्पथे अपकीर्तिः, चैत्यवृक्षे ग्रहप्रकोपः, वल्मीकपार्श्वे विपत्तयः, गर्तयुक्ते स्थाने पिपासा, कूर्मपृष्ठभूमौ (मध्यभागे उन्नते) गृहनिर्माणे सति धननाशश्च भवति।

भवननिर्माणाय भूमिचयनं, भूमिपरीक्षणञ्चापि अस्मिन्नेव क्रमे आगच्छति। चितस्थाने अनेकभू-खण्डेषुको भूखण्डः अस्माकं कृते उपयुक्त इति निर्धारणायवास्तुशास्त्रेषु पुराणेषु च भूमिचयनस्य भूमिपरीक्षणस्य च विधीनां वर्णनं प्राप्यते, येनानुसारेणभूखण्डे निर्मितभवनेमानवाः सुखपूर्वकंनिवासं कुर्वन्ति।

मानवानां कृते निवासस्थानसम्बन्धितैः सुखसुविध्यसफलता-सुरक्षाप्रभृतिभिःसह नियम-प्रविधिभिश्च युक्ता विद्या एव वास्तुविद्या। मानवशरीरं पञ्चमहाभूतैः (पृथ्वी-जल-अग्नि-वायु-आकाशैः) निर्मितमस्ति। पृथ्वीतत्त्वं सर्वमहाभूतेषु गुणाधिक्य-कारणान्महत्त्वपूर्णमस्ति। भवननिर्माणे अपि आधारभूततत्त्वरूपे पृथ्वी एव भवति। भूमौ भवननिर्माणसमये अन्यमहाभूतानां सम्यक् सामञ्जस्यस्थापनाय एव वास्तुशास्त्रस्य प्रणयनमभवत्। वास्तुशास्त्रविज्ञो भूमेः शुभाशुभतत्त्वानि, आकारः, प्लत्वं, गुणवत्ता चाद्यनेकविषयाणां विचारं करोति येन सुदृढभवनस्य निर्माणं भवेत्।

भागवतपुराणे प्राचीनकालस्य महाराजापृथोः 'पृथ्वीदोहन-वृत्तान्तम्"[13] उपलभ्यते। तस्मिन् समये न केवलंअसमानां प्रस्तर-युक्ताञ्च भूमिं ग्राम-नगरस्यानुकूलां कृतवान्, अपितु अनेकानेक-

भूखण्डानां, पर्वतानां, वनानां, नदीतटादिप्रदेशानाञ्च भू-परीक्षणमपि कृतम्। अनेन प्रकारेण भूमेःमानवपशुसम्पदीनाम् अनुकूलं चयनमपि अभवत्। पृथ्वीदोहनस्यानन्तरं विभिन्नवर्णेभ्यो निवासार्थभूभागा-नांचयनमपि अभवत्। भूमिः रङ्ग-रूप-स्वादानामाधारेण वर्गीकृतावर्तते।

अस्मिन् विषये गर्गादि-ऋषयः कथयन्ति यद् यस्यां भूमौगत्वा एव मनःप्रसादो भवेत् सा भूमिः भवननिर्माणाय, निवासाय च उत्तमा भवति। यथा-

**मनसश्चक्षुषोर्यत्र सन्तोषो जायते भुवि।**
**तस्यां कार्यं गृहं सर्वैरिति गर्गादिसम्मतम्।।**[14]

निवासयोग्यभूमेर्लक्षणक्रमे वराहमिहिरो बृहत्संहितायां कथयति यद् यत्र प्रशस्ताः (मांगलिकाः) औषधयः, वृक्षाः, लतादयश्च उत्पन्नाः भवन्ति, मधुरसुगन्धा, स्निग्धा, समतला च भूमिः स्यात्, यत्र पथिकाः मार्गपरिश्रमेभ्यो मुक्ताः प्रसन्नाः प्रफुल्लिताश्च भवन्ति, सा भूमिः निरन्तरसुख-शान्ति-आनन्द-लक्ष्मी-प्रदायिका भवति।

**शस्तौषधिद्रुमलता मधुरा सुगन्धा स्निग्धा समा न सुषिरा च मही नराणाम्।**
**अप्यध्वनि श्रमविनोदमुपागतानांधत्ते श्रियं किमुत शाश्वतमन्दिरेषु॥**[15]

संक्षेपेणया भूमिःऊर्वरा,स्निग्धमृत्तिका, जलयुक्ता, तृणप्रस्तरयुक्ता च स्यात्, सा एव निवासयोग्या भवतीति वास्तुशास्त्रविज्ञाः कथयन्ति-

**अनूषरा स्निग्धवती प्रशस्ता च बहूदका ।**
**तृणापलाविता या सा मान्या वास्तुविधौ धरा॥**[16]

तात्त्विकदृष्ट्या कठोरा, ऊर्वरा, जलयुक्ता च भूमिः भवननिर्माणाय शुभदा भवति। तथैव स्फुटिता, शल्ययुक्ता, वल्मीका, शुष्का च भूमिः त्याज्या भवति। यथा-

**स्फुटिता च सशल्या च वल्मीकाऽऽरोहिणी तथा।**
**दूरतः परिहर्तव्या कर्त्तुरायुर्धनापहा॥**[17]

उपर्युक्तलक्षणैर्युक्तत्याज्यभूमेः विचारो नैव कृते सति किं फलं भवितुमर्हति? - स्फुटितभूमिः मरणदा, शुष्कभूमिः अर्थहानिकारिका, शल्ययुक्त्या सर्वदा क्लेशदा, असमानभूम्या शत्रुवृद्धिः, श्मशानभूमिः भयकारिका, वल्मीकभूमिः विपत्तिदा, गर्तयुक्ता विनाशकारिका, कूर्माकारभूमिः धननाशिका च भवति। यथा-

**स्फुटिता मरणं कुर्यादूषरा धननाशिनी।**
**सशल्या क्लेशदा नित्यं विषमा शत्रुवर्धिनी॥**
**चैत्ये भयं गृहकृतो वल्मीके स्वकुले विपत्।**
**गर्तायान्तु विनाशः स्यात् कूर्माकारे धनक्षयः॥**[18]

प्राचीनवर्णव्यवस्थायाः उपयोगिता अद्यापि प्रचलिता वर्तते। वास्तुशास्त्रेषु पुराणेषु च वर्णितविभिन्नरङ्गयुक्तभूमेः उपादेयता अद्यापि तथैव अस्ति यथा प्राचीनकाले आसीत्। मत्स्यपुराणे भूमिवर्णनविषये उक्तमस्ति यत् प्रथमा भूमिपरीक्षा, तदनन्तरं भवननिर्माणञ्च कुर्यात्।

**पूर्वं भूमिं परीक्षेत् पश्चाद्वास्तुं प्रकल्पयेत्।**[19]

भारतीयसंस्कृतौचतुर्वर्णानां कृते उचितभूमिचयनं वर्णः, गन्धः, स्वादः, स्पर्शः, वस्तु, शब्दः, प्लवः, आकाराद्याधारेण क्रियते। यतो हि भूमेः केचिद्गुण-धर्माःसर्वेषां मनुष्याणां कृते समानाः भवन्ति तथा च केचित्स्ववर्णराश्यानुसारं विचारणीया भवन्ति। भारतीयवास्तुविज्ञाः मनीषयः भूमिचयनस्य अनेकविधीन्प्रति-पादितवन्तः। तेषु केषाञ्चिद् भूमिचयनविधीनां विवरणं क्रियते-

**वर्णद्वारा भूमिचयनम् -**

श्वेता, रक्ता, पीता, श्यामा च चतस्रः वर्णयुक्ताभूमिः क्रमशः ब्राह्मणादीनां चतुर्णां वर्णानां (ब्राह्मण-क्षत्रिय-वैश्य-शूद्राणां) कृते प्रशंसिताभवति। यथा-

**श्वेता रक्ता तथा पीता कृष्णा चैवानुपूर्वशः॥**[20]

ब्राह्मणाः स्वज्ञानप्रकाशैः, यज्ञादिक्रियाभिश्च जनेभ्यो मानसिकशान्तिं प्रददति। श्वेतवर्णः शान्तेर्गुणधर्मयुक्तो भवति। ब्राह्मणानां तेजः आत्मिकज्ञानाय श्वेतवर्णस्य संकेतरूपो भवति। अतो ब्राह्मणवर्णाय श्वेतवर्णा भूमिः प्रशस्ता मन्यते।

क्षत्रियवर्णानां कृते रक्तवर्णीया भूमिः उपयोगिनीभवति। रक्तमृत्तिका लौहतत्त्वोत्तेजनायुक्ता उत्साहगुणधर्मा च भवति। एतादृशगुणकारणात् क्षत्रियस्य सैन्यकर्मणः कृते रक्तभूमिः उपयोगिनीभवति। वैश्यवर्णाय पीतवर्णा भूमिः भवननिर्माणार्थं ग्राह्या भवति। अस्याः भूमेः सम्बन्धः बुद्धिमता-स्फूर्तिदायक-ऊर्वरकैः सह कृषिकार्ये सर्वथा अनुकूलता च भवति। तमोगुणयुक्ता कृष्णवर्णा भूमिः शूद्राणांकृते ग्राह्या भवति। चतुर्वर्णविरहिता अन्यवर्णा भूमिः कल्याणकारिणीनैव भवति। सा भूमिः सदैव त्याज्या भवति।

**वस्तुद्वारा भूमिचयनम्-**

मृत्तिकायामुत्पन्नवनस्पत्याधारेअपि भूमिचयनविधिरस्माकं वास्तु-शास्त्रेषु विवेचितमस्ति यथा क्रमशः कुशयुक्ता भूमिः ब्राह्मणाय, मुञ्जयुक्ता भूमिः क्षत्रियस्य कृते, दुर्वायुक्ता भूमिः वैश्यवर्णस्य कृते, कासयुक्ता च भूमिः शूद्रवर्णस्य कृते शुभदा भवति। यथा-

**कुशयुक्ता शरबहुला दुर्वाकाशावृत्ता क्रमेण मही।**[21]

शब्दद्वारा भूमिचयनम्-

शब्दद्वारा अपि उत्तमभूमेः चयनं कर्तुं शक्यते। या भूमिः ताडिते सति मृदङ्ग-वीणा-दुन्दुभिरिव ध्वनिः करोति तथा चया भूमिः हस्ति- अश्व- समुद्रस्य इव ध्वनिः करोति, एतादृशी भूमिः शुभदा भवति। यथा-

**मृदङ्गवल्लकीवेणुदुन्दुभीनां समाध्वनौ।**
**द्विपाश्वाब्धि समास्वाना चेति स्यूर्भूमयः शुभाः॥**[22]

**गजपृष्ठभूखण्डः-**

या भूमिः दक्षिण-पश्चिम-नैर्ऋत्य-वायव्यकोणेषु उन्नता भवति सा भूमिः गजपृष्ठा इति नाम्ना ज्ञायते। गजपृष्ठभूम्यां निवासे सति लक्ष्मी-धन-आयुः-सम्पत्तौ वृद्धिकरिका भवति। यथा-

**दक्षिणे पश्चिमे चैव नैर्ऋत्ये वायुकोणके।**
**एभिरुच्चा भवेद् भूमिर्गजपृष्ठोऽभिधीयते॥**
**गजपृष्ठे भवेद्वासः सलक्ष्मीधनपूरितः।**
**आयुवृद्धिकरी नित्यं जायते नात्र संशयः॥**[23]

**कूर्मपृष्ठभूखण्डः-**

कूर्मपृष्ठभूमेराकारो मध्यभागे विशेषोन्नताचतुर्षु दिक्षु भूमिः प्लवा भवति। या कच्छपपृष्ठस्य इव दृश्यते। कूर्मपृष्ठभूमिः निवासयोग्या भवति, सा प्रतिदिनोत्साहे, धनधान्ये च वृद्धिकारिका भवति। यथा-

**मध्ये तूच्च भवेद्यत्र नीचं चैव चतुर्दिशम्।**
**कूर्मपृष्ठं विजानीयात्तत्र वासं समाचरेत्।**
**कूर्मपृष्ठे भवेद्वासो नित्योत्साहसुखप्रदः।**
**धनधान्यं भवेत्तस्य निश्चितं विपुलं धनम्॥**[24]

**दैत्यपृष्ठभूखण्डः-**

ईशान-आग्नेयकोणयोरुन्नता पश्चिमदिशि च प्लवा भूमिः दैत्यपृष्ठा इति कथ्यते। एषा भूमिः अशुभा स्वीक्रियते वास्तुविज्ञैः। अस्यां भूमौ भवननिर्माणे सति गृहे लक्ष्मी न कदापि आगच्छति तथा च धन-पुत्र-पशूनामपि हानिर्भवति। यथा-

**पूर्वाग्निशम्भुकोणेषु उन्नतिश्च यदा भवेत्।**
**पश्चिमे च यदा नीच दैत्यपृष्ठोऽभिश्चीयते॥**
**दैत्यपृष्ठे कृते वासे लक्ष्मीर्नायाति मन्दिरम्।**
**धनपुत्रपशूनां च हानिरेव न संशयः॥**[25]

भूखण्डस्य विभिन्नभागान् विस्तृतं कुर्वन् बृहद्वास्तुमालायां भूमेः उन्नतता-प्लवतायाः यमवीथी-गजवीथी-भूतवीथीप्रभृतिषु अष्टसु भूखण्डेषु विभक्तः। एतासां वीथीनां शुभाशुभफलंनिम्न-तालिकामाध्यमेनज्ञातुं शक्यते-

| क्र. | वीथ्याः नाम | भूमिः यस्मिन् दिशि उन्नता स्यात् | भूमिः यस्मिन् दिशि प्लवा स्यात् | फलम् |
|---|---|---|---|---|
| 1. | **नागवीथिः** | अग्निकोणे | वायव्यकोणे | अशान्तिः, अस्थिरता च। |
| 2. | **भूतवीथिः** | ईशानकोणे | नैर्ऋत्यकोणे | चिन्ता, धनहानिश्च। |
| 3. | **वैश्वानरी** | वायव्यकोणे | अग्निकोणे | मध्यमा। |
| 4. | **धनवीथिः** | नैर्ऋत्यकोणे | ईशानकोणे | सुख, शान्तिश्च। |
| 5. | **गोवीथिः** | पश्चिमदिशि | पूर्वदिशि | धन-यश-वृद्धिः। |
| 6. | **जलवीथिः** | पूर्वदिशि | पश्चिमदिशि | सन्तानहानिः |
| 7. | **यमनीथिः** | उत्तरदिशि | दक्षिणदिशि | दारिद्रयं, कष्टश्च |
| 8. | **गजवीथिः** | दक्षिणदिशि | उत्तरदिशि | धन-वृद्धिः |

**निष्कर्षः-**

समराङ्गणसूत्रधारे ब्राह्मणादिवर्णानांकृते या भूमिः प्रशस्ता मन्यते तत्रैव ग्रन्थान्तरस्य मतेन च भिन्नता अपि दृश्यते। यथा या भूमिः कुङ्कुम-अगरुकर्पूर-चन्दनादिभिर्वृक्षैर्मिश्रिता अन्यथा भिन्नभिन्न-सुगन्धैर्युता, कमल-रक्त-मालती-चम्पकादिपुष्पैः गन्धयुक्ता, गोमूत्र-गोमय-दुग्ध-दही-मधु-आज्ययज्ञादिद्रव्यैर्गन्धयुक्ता, मदिरा-माध्वीक-गजमदादिगन्धैर्युक्ता च स्यात् तथा च शालि-धान्यपिष्टगन्धैर्युक्ता, धान्यादिसुगन्धैर्युक्ता च भूमिः ब्राह्मणादिसर्ववर्णानां कृते गृहनिर्माणाय सुखशान्तिदा भवति।

अनेन प्रकारेण वक्तुं शक्यते भारतीयसंस्कृतिः चतुर्वर्णानां कृते उचितभूमिचयनविषये बहुषु ग्रन्थेषु ग्रन्थान्तरेषु च विभिन्नविधिभिः विभिन्नभूमिचयनमार्गान्परामृशति। अनेन प्रकारेण बहुविशदचिन्तनमस्माकं वास्तशास्त्रैः कृतं वर्तते, सर्वेषां विषयाणाम् एकस्मिन् शोधपत्रे विवेचनं नैव कर्तुं शक्यते। तथापि संक्षिप्तरूपेण भवननिर्माणाय उचितभूमिचयनविषये विवेचितमिति शम्।

**पादटिप्पणी :-**

1 ब्रह्माण्ड और सौर परिवार, (प्रो.देवीप्रसाद त्रिपाठी) पृ. 13
2 वे.ज्यो. - 1.5
3 अष्टा.- 8.3.19
4 पारिजात-कोश (ईश्वरचन्द्र शर्मा) पृ. 325
5 ना.स. 1.5
6 श्रीमद्भा. 10.8.5
7 बृ.पा.हो. 1.6
8 भारतीय ज्योतिष, (शास्त्रीनेमिचन्द्रः) पृ.17
9 वास्तुरत्नाकरे, भूमिपरिग्रहप्रकरणे, श्लोक. 11
10 वास्तुसारसंग्रहः 3.1
11 म.पु. 256.2
12 बृ.सं., वास्तुविद्याध्यायः, श्लोकः 89-90
13 श्रीमद्भा. 4.18.29-32
14 बृ.वा.मा., भूमिर्जीवितादिज्ञानम् श्लोक 93, पृ. 18
15 बृ.सं., वास्तुविद्याध्यायः, श्लोक 88
16 बृ.वा.मा., भूर्मेलक्षणानि, श्लोक 77
17 बृ.वा.मा., भूर्मेलक्षणानि, 79
18 बृ.वा.मा., भूर्मेलक्षणानि श्लोक 80-81
19 म. पु. 253.11 (पू.)
20 तत्रैव 253.11 (उ.)
21 बृ. सं., वास्तुविद्याध्यायः, श्लोक 97
22 समराङ्गणसूत्रधारः 10.51
23 वास्तुप्रबोधिनी, अध्यायः 7, पृ. 29
24 तत्रैव पृ.29
25 वास्तुप्रबोधिनी, पृ. 29-30



National Journal of Hindi & Sanskrit Research

ISSN: 2454-9177
NJHSR 2024; 1(52): 61-64

www.sanskritarticle.com

**नवीनशास्त्री रा. पुराणिकः**
शोधच्छात्रः,
कर्नाटकसंस्कृतविश्वविद्यालयः,
चामराजपेटे, बेङ्गलूरु-१८, कर्नाटक

**शोध निर्देशक**
**डॉ.एम् वि जयरेवण्णः**
विद्वान्,
कर्नाटकसंस्कृतविश्वविद्यालयः,
बेङ्गलूरु -१८, कर्नाटक

**Correspondence:**
**नवीनशास्त्री रा. पुराणिकः**
शोधच्छात्रः,
कर्नाटकसंस्कृतविश्वविद्यालयः,
चामराजपेटे, बेङ्गलूरु-१८, कर्नाटक

# ।। संस्कृतवाङ्मये वर्णित-विज्ञान-तंत्रज्ञानस्य उपयोगिता ।।

**नवीनशास्त्री रा. पुराणिकः, डॉ.एम् वि जयरेवण्णः**

**पीठिका:**

संस्कृतम् नाम ज्ञानस्य विज्ञानस्य च भाण्डागारम्। संस्कृतेन अस्पष्टः विज्ञानस्य भागः प्रायः नास्ति। आधुनिक विज्ञानिभिः विज्ञानस्य याः शाखाः अवलंबिताः प्रायः ताः सर्वाः शाखाः प्राचीनैः भारतीयैः संशोधिताः वर्धिताश्च सन्ति। तेषां फलस्वरूपभूता विज्ञानपरंपरा अधुनापि अनुवर्तमाना वर्तते। एतस्याः भारतीयविज्ञान परंपरायाः अध्येनम् अतयिावश्यकं दृश्यते।

वेदकाले एव अस्मत्पूर्वजाः आकाशकायानां विषये सम्यक् ज्ञानवंतः आसन्। तैतरीय संहितायां सूर्यस्य विषये-

**" मित्रो दाधार पृथिवीमुतद्याम्। मित्र कृष्टीः" इति उक्तम्।**

**तैतरीयारण्यके एवम् उक्तम्- "येनेमा विश्वा भुवनानि तस्थुः । ततः क्षत्रं बलमोजश्च जातम्" । इति ।**

अस्य अयमर्थः

**"सुर्यदेवस्य अनुग्रहेणैव इदं विश्वमस्ति सर्वोपि जीवराशिः अस्मात् सुर्यदेव बलम् ओजश्च प्राप्नोति" ।**

**चंद्रस्य शुक्लपक्षे वृद्धिः, कृष्णपक्षे क्षयः च भूम्याः चलनकारणात् संभवति ।**

**"चंद्रः भूमिं परितः प्रदक्षिणं करोति" इत्यंशः महाभारते निरूपितः ।**

आर्यभटः - भास्कराचार्य वराहमिहिरा ब्रह्मगुप्तदयः प्राख्याताः खगोलशास्त्रज्ञाः अस्माकं भारतदेशे व्यरजतं। एतैः स्वकीयेषु आर्यभटिय सिद्धान्तशिरोमणि ग्रन्थेषु गुरुत्वाकर्षणं, सुर्यग्रहणं, चंद्रग्रहणं, उल्कापाताः, धूमकेतुः, ग्रहाणां चलनं, नक्षत्रणां गतिः, भूकंपनम् इत्यादीनां विषये बह्वो अंशाः सप्रमाणं निरूपिताः सन्ति ।

गणितक्षेत्रे शुन्यस्य योगदानं भारतीयानामेव अस्ति। दशांशपद्धतिः संख्या "पै" मूल्यं, वर्गमूल्यं, इत्यादयः अंशाः भास्कराचार्य - आर्यभटाधिभिः गणितज्ञैः सम्यक् प्रतिपादिताः सन्ति।

पैथागोरस् सिद्धान्तः इतिः यथः इदानीं पठ्यते तम् बोधायनकात्यायनौ प्रतिपादितवन्तौ। क्रि. पू. द्वितीयशतके नागार्जुनः रसरत्नाकरग्रन्थें लोह निर्माणक्रमं प्रतिपादितवान् ।

सूर्यस्य प्रकाशः निमिषार्धेन 2202 योजनदूरं क्रमते इति ऋक्संहतियां उक्तम्। आयुर्वेदस्य विज्ञाने चरकसंहिता, सुश्रुतसंहिता, अष्टाङ्गसंग्रहः, भावप्रकाशः इत्यादयः, प्रमुखाः ग्रन्थाः। एतेषु ग्रन्थेषु कायचिकित्सा, शस्त्रक्रिया, रक्तसंचारः इत्यादयः सविस्तरं निरूपिताः सन्ति।

नाडीदर्पणग्रन्ये भिषजः - रोगस्वरूपं, रोगनिधानतंत्रं, अङ्गुष्ठमुले विद्यमानायाः धमन्याः चेष्टथा जानन्ति इति वर्णितम्।

वृक्षायुर्वेदग्रन्थे चतुर्विध वृक्षाणां विषये एवम् उत्कम् " वनस्पतिः, दुमः, लता, गुल्म " एते चत्वारः पादपजातयः इति कथ्यन्ते।

एतेषाम् उत्पन्तिः त्रिधा। केचन बीजात्, केचन काण्डात्, अन्ये केचन कन्डात् प्रगृह्णन्ति। ये पुष्पं विना फलं यच्छन्ति ते वनस्पतयः, ये पुष्पैः फलन्ति ते द्रुमाः भवन्ति। या प्रतानैः प्रसरन्ति ता लताः, बहुस्तम्भाः बहुशाखाः इति च पादपाः ते गुल्माः इति प्रसिद्धाः।

संस्कृताभाषा सर्वज्ञानसेवधिः। प्रपञ्चे भारतस्य गौरवयुतं स्थानं सस्कृताधीनम्।

**संस्कृतवाङ्गयं सहस्त्रेभ्यः वर्षेभ्यः समग्र भारतीय चिन्तनस्य प्रातिनिध्यम्, करोति।**

**धर्मदर्शनकला संस्कृति विज्ञानाधीनि सर्वक्षेत्राणि एतत् चिन्तन-परिधौ समाविष्टानि भवन्ति।**

विधितमिदं सर्वेषां यत् वेदाः भारतीय प्राङ्गयाः अक्षयो निधिः यः अति प्रचीन कालात् दयारूपेण अनुवर्तते, यत्र हि ऐहिक - आमुष्मिक-धार्मिक- आध्यांकानां सर्वेषां विषयाणां तत्त्वानि अन्तर्हितानि वर्तन्ते इति।

'वेदे सर्वं प्रतितम्', 'वेदात् सर्व प्रसिद्धति 'वेदाः सर्वहितार्याय' इत्यादयः उक्तयः अमुमेव अर्थं द्योतयन्ति ।

विपुलेऽस्मिन् संस्कृतवाङ्गये मानवजीवनस्य संरक्षणाय, संवर्धनाय, कल्याणाय च सर्वेऽपि विषयाः अस्माकं ऋषिभिः शास्त्रकारैश्च सविस्तरं निरूपिताः सन्ति। नास्ति कोऽपि जीवनोपयोगी विषयः यस्य निरूपणम् अत्र न विहितम्।

'लोके धीर्शानमन्यत्र विज्ञानं शिल्पशास्त्रयोः' इति अमरसिंहस्य नामलिङ्गानुशासने ज्ञानविज्ञानयोः भेधः स्पष्टीकृत्तः वर्तते। तथापि यस्मिन्नर्थे आङ्ग्लभाषायां 'Science' इति शब्दः प्रयुत्मते तस्मिन्नेवार्थे अत्र विज्ञान शब्दस्य प्रयोगः विहितः अस्माभिरधुना। तदनुसारेण शास्त्रिमार्गमनुप्रयोगार्हता एवं विज्ञानस्य विशिष्टं लक्षणम्।

भौतशास्त्रम्, रसायनशास्त्रम्, वनस्पतिशास्त्रम्, प्रणिशास्त्रम्, वैद्यशास्त्रम्, गणितशास्रम्, सङ्गीतशात्रम्, कामशास्त्रम्, शिल्पशास्त्रम् इत्यादीनि शास्त्राणि अद्यत्वे 'विज्ञान' पदवाच्यनि भवन्ति। एवं संस्कृतवाङ्गयं वैज्ञानिकविषयाणां अक्षये निधिरेवास्ति।

मूर्धन्यपाश्चात्यसूरीणां कथनेनापि ज्ञायते यत् नैक-सहस्रभ्यः प्रगेव भारतं महोन्नतवैज्ञानिकसिद्धीनां स्थानमासोदिति । उदाहरणार्थम् - मोनियर् विलयिम्स् एवमभिप्रैति ....

**"More than this, Hindus had made considarable advances in Astronomy, Algebra, Arithmetic, Botany and Medicine, not to mention their superiority in Grammar, long before some of these science were cultivated by the most ancient nations of Europe.."**

तथापि तदिदं विज्ञानं तु पाशत्थदेशोपज्ञमिति, आधुनिकलाश्चैव योगदानमिति

ईध्यशविज्ञाने भारतीयाः अनभिज्ञाः अप्रयोगशीलाश्च आसन्निति कोऽपि भ्रमः, कापि भ्रान्तिः, किञ्चित् मिथ्याधारणम् अज्ञेषु विज्ञेषु अपि वरीवर्ति।

निर्मूलस्य स्य अज्ञानस्य निराकरणं, प्राजीनभारतीयानां योगदानस्य पुरः स्थापनम्, तस्मात् अस्मदीयानां ज्ञानविज्ञानयोः महत्ताविषये गर्वभावनायाः प्रत्यानयनमपि निबन्धस्यास्य मूलो-उद्येश्य अस्ति।

"पाश्चात्यमित्येव महन्न सर्वं न चास्मदीयं तु भवेदवद्यम् सन्तः परीक्ष्यान्यतरद्धजन्ते मूढः परप्रत्ययनेयबुद्धिः"

**"पूर्णमदः पूर्णमिदं पूर्णात् पूर्णमुदच्चते।**

**पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते"।।**

भारत देश: आपञ्चसहस्रवर्षभ्यः ज्ञानविज्ञानयोः क्षेत्रमस्ति। क्रि.श. 12 शतकपर्यन्तं विज्ञानस्य गतिः अप्रतिहता आसीत्। परं पश्चात् वैदिशिकाः प्रबलमभियानं प्रारभथा।

**तदा चिन्तनशीलतैव कुण्ठिताऽभूत् ।**

**अतः विज्ञानस्य अभिवृद्धिः प्रायः स्थगिता।**

**परन्तु विज्ञानक्षेत्रे भारतीयाः अस्माकं प्राचनानानं साधना प्रकृष्टा प्रतिभाति प्रगतिशीलाः इति केचन भाववयेयुः ।**

**अतः अस्मिन् विषये किञ्चिद् वस्तुनिष्टतया विचार्यते ।**

क्रिस्तपूर्व सहस्त्रत्रयवर्षेभ्योऽपि प्राक् उत्तमा नागरिकता सिन्धु नदीतीरे अभिवृद्धा आसीत्। तत्र श्रेष्ठानि नगराणि निर्मिथसन् । येषां निर्माणं वैज्ञानिकीं प्रगतिं विना न सम्भावयितुं शक्यम्। वेदकाले भारतीयाः अङ्कादिगणनासु खगोलपरिज्ञाने वैद्यशास्त्रे च प्रगतिं साधितवन्तः इति प्रतिभाति ।

वेदोत्तरकालिकेषु शुल्बादिसूत्रग्रन्थेषु रेखागणितस्य (ज्यामितेः) ज्ञानमपि प्रकर्षमाप्नोत् इति गोचर भवति।

लोहानां अयस्ताम्रस्वर्णादीनां परिशोधने च प्रवीण्यमासीदिति ज्ञायते।

वेदशुल्वादिग्रन्थाः विज्ञानस्य बोधनाय न प्रवृत्ताः किन्तुज्ञान बोधनाय प्रवृत्तेषु तेषु तत्र तत्र तदानीन्तनस्य विज्ञानस्य प्रगतेः प्रतिफलनं गोचरीभवति। तत्रत्यानं परिकल्पनानां (Concepts) आधारेण अस्माभिः तास्ताः ज्ञिानसिद्धपः ऊहनीयाः भवन्ति। तदुत्तरकाले विज्ञानस्य तासु तासु शाखासु अभिवृद्धासु -

**तत्तद्विषये निष्ठतया च ग्रन्थाः मेधाविभिः विरचिताः।**

**उभयद्रुष्टयऽपि अस्माभिः विज्ञान परम्परा वीक्षणीया ।।**

**आयुर्वेदविज्ञानम्**

भूमण्डलेऽस्मिन् अन्यदेशेभ्यः प्रगेव भारतवर्ष चिकित्साविज्ञानक्षेत्रे समुन्नतपदमास्कमारूढम् आसीदिति इतिहासविदां मतम्। मानवस्य एहिक आमुष्मकाफलसाधनार्थ आरोग्यमेव प्रधानम्। आरोग्यसाधनं तु आयुर्वेदाध्ययनादेव इति कारणात् मूलभूतमिदं आयुर्वेदविज्ञानम्।

**धर्मार्थकाममोक्षाणां आरोग्यं मूलमुत्तमम्।**

**रोगस्यस्यापहर्तारः श्रेयसो जीवितस्य च।।**

**-चरक संहिता, सूत्रस्थानम् - 1.14 अतः 'आयुर्वेदोपदेशेषु विधेयः परमादरः ।**

स्वास्थ्यरक्षणे तस्य प्राधान्यमिलक्ष्य आयुर्वेदः अथर्ववेदस्योपवेदत्वेन प्रथां भजते। मतमिदं चरकसुश्रुतवाग्भटाधिभिः प्रमुखायुर्वेदाचार्यैरेव प्रकाशितम्। चक्रपाणिरपि (व्याख्यानकारः) वदति- 'अथर्ववेदस्य आयुर्वेदत्वमुक्तं भवति, अथर्ववेदैकप्रेष एव आयुर्वेदः इति।

आयुर्वेद - शब्दस्य व्युत्पत्तिं साधयद्भिराचार्ये प्रकटीकृतम्- आयुरस्मिन् विद्यते, अनेन वा आयुर्विन्दति इति।

"भावप्रकाश' टीकाकारोऽपि आयुर्वेद शब्दम् एवं विशदीकरोति-

**अनेन पुरुषो यस्माद आयुर्विन्दति वेत्ति च।**

**तस्मान्मुनिवौरैष आयुर्वेद इति स्मृतः ।।**

**आयुर्वेदानुसारेण आयुः चतुर्विधम् हितायुः, अहितायुः, सुखायु, दुःखायुश्चेति ।**

**हिताहितं सुखं दुःखं आयुस्तस्य हिताहितम्।**

**मानं च तच्च यत्रोक्तं आयुर्वेदः स उच्यते ।।** च.सू. 3.41

**मानसिकरीरकरोगरहितस्य ज्ञानिनः सुद्दढवतः मानवस्य आयुः सुखायुः। एतद्विपरीतं दुःखायुः ।**

**अरिषड्वर्गर्जितस्य सर्वभूतहिते रतस्य (सज्जनस्य) आयुः हितायुः। तदवरोधे अहितायुः भवति।**

**आयुश्च शरीरेन्द्रियसत्त्वात्मसंयोगः। इत्थं हि शरीरं तु नानाविध-आधिव्याधीनाम् आगारमेव। अतः**

**व्याधुपिसृष्टना व्याधिपरिमोक्षः, स्वस्थस्य स्वास्थ्यरक्षणं च आयुर्वेदस्य द्वे प्रयोजने।**

आयुर्वेदस्य इतिहासः वैदिककालादेव आरभ्यते। अतः पञ्चसहस्रवर्षेभ्योऽपि प्राचीनोऽयं इतिहासः। विशेषतः क्रिस्तपूर्वतुर्थशतकादारभ्य क्रिस्तशकस्य 11 शतकपर्यन्तं आयुर्वेदस्य उत्कृष्टपरम्पराः न केवलं प्रचारे आसन् अपि तु तत्कालीनेषु प्रख्यातेषु नालन्दा, विक्रमाशिला, वलभी इत्यादषु विश्वविद्यालयेषु प्रमुखविषयत्वेन पाठ्यन्ते स्म। भारतीयैः सह विदेशीयच्छात्रा अपि अस्य प्रयोजनं प्राप्तवन्त आसन्।

चरकाचार्यविरचिता चरकसंहिता, सुश्रुताजार्यप्रणीता सुश्श्रुतसंहिता, वाग्भटग्रथितम् अष्टाङ्गहृदयम्, माधवकरस्य माधवनदानम्, साङ्र्गधरस्य शाङ्र्गधरपद्धतिः इत्यादयः आयुर्वेदस्य प्रमुखपग्रन्थाः सन्ति। चरकसंहितायां 341 सस्यजन्यद्रव्याणं, 177 प्राणिजन्य द्रव्याणां, 64 खनिजद्रव्याणं च उल्लेखः कृतोऽस्ति। ग्रन्थस्यास्य महत्वमभिलक्ष्य अस्य नैकानि व्याख्यानानि रचितानि।।

**कृत्स्नोऽपि अयुर्वेदः अष्टधा विभक्तः ।**

**शाल्य-शालाक्य-कायचिकित्सा- भूतविद्या- कौमारभृत्य अगदतन्त्र-रसायनतन्त्र वाजीकरणानीति।**

**इदानीम् प्रत्योकमङ्ग विवेचयामः।**

1) शल्यतन्त्रम्-

तन्त्रमिदं पाश्चात्यचिकित्सायां Surgery and Midwifery पदेन व्यपादिशते मूत्रपुरीषयाः निरोधे चर्मशलाकया लोहशलाकया वा शल्यक्रिया, गण्डमालाभैषज्यप्रसङ्गे, दुष्करप्रसवप्रसङ्गेषु च क्रियमाणाः प्रभूताः शल्यक्रियाः सुश्रुतसंहितायाम् उल्लिखिताः सन्ति।

2) शालाक्यातन्त्रम् (Opthamology including ENT and Dentistry)

-ग्रीवायाः उपरिभागस्यान्तरिकचिकित्सा शालाक्यान्तर्भूता। चक्षुर्नासागलश्रोत्रमुख सम्बन्धिनोरोगाणं निवारणोपायाः भृशं वर्णिताः शिरोरोगकेशरोगाणां निवृत्तौ नानाविधोपचाराः समुपलभ्यन्ते। केशवर्द्धनं, तेषां कृष्णत्वं सौन्दर्यं च, खल्याटानां चिकित्सनमपि

औषधनिर्देशम् उपदिष्टम्।

3) कायजिकित्सा (General Medicine) -

विविधशारीरिकरोगाणां लवण-निदान- परिहारोपायाः विभागेऽस्मिन् विशदीकृताः। कायचिकिस्तान्तर्गताः शरीरोदररोगाः ज्वरयक्ष्मपक्षाघातस्राव जलोदरोदरशूलदयः वातपित्तकफादयों ओशजानैकविधाः। अन्यदपि कुष्ठहृद्रोगपाण्डु-उदरशूल-तृषितत्वा-दीनां रोगणां भैषज्यं कायजिकित्साविभागे वर्णितमस्ति।

4) भूतविद्या (Psycho-therapy) मानसरोगविज्ञानम् इति अपरं नाम अस्याः चिकित्सायाः। मनसि राजसतामसगुणेषु आवृतेषु सत्सु उन्माद-आपस्मार अतत्वाभिनिवेशः (Hysteria) इत्यादिरोगाः भवन्ति। सुप्तसम्मोहनादिविधानेन एषां रोगाणां चिकित्सा भवितुमर्हति। तथैव यक्षादपिशाचसुरनागादिदुष्टसमाविष्ट-चित्तानां च व्यक्तीनां चिकिस्ता भुतविद्या भवति। विविधयन्त्रमोगीनां प्रयोगः विविधयन्त्रमंत्रणीनां अत्र कार्यः भवति।

5) कौमारभृत्यम् (Pediatrics) बालरोगाणां जिकित्सा कौमारभृत्यपदेन व्यापदिश्यते । शिसोः जननादारभ्यषोडशवर्षपर्यन्तं विविधवयोऽनुगुणं सम्भाव्यविविधरोगाणां लक्षण-चिकित्सा-प्रतिरोधक्रमाणां वर्णनम् एतस्मिन् विभागे कृत्तमस्ति। शिशूनां संरक्षणां, बालग्रहबाधाः, दुष्टस्तन्येन जनिताः रोगाः, तेषां निवारणोपायाः कोमारभृत्ये विशदीकृत्ताः। खीरोगाः, विशेषतः गर्भस्त्रावनिवारणं, गर्भसन्धारणं, सुखप्रसवतन्त्राणि, स्रीरोगभैष-ज्यानि चात्र भृशमुपदिष्टानि ।

6) अगदतन्त्र (Toxicology) अगदो विषप्रतीकारः, तदर्थं तन्त्रम् अगदतन्त्रम् इति डल्हणस्य व्याख्याम्। विविधेभ्यो विषवद्भ्यो जीवोभ्यः त्राणार्थं विषप्रतीकरणार्थं च अनुष्ठितं चिकित्सितम् अगदतन्त्रान्तर्गतम् । सर्पकीटलूतावृश्चिकमूषिकाधिदष्टविषव्यञ्जनार्थ विविधविषसंयोगोपशमनार्थं च विषनिर्हरणे चिकित्सायाम् अस्यांबहुविधोपायाः ज्ञाप्यन्ते।

7) रसायनतन्त्रम् (Rejuvenation and Geriatrics) रसायनतन्त्रं नामा वयःस्थापनामायुर्मेधाबलकरं रोगपहरणसमर्थं च - इति। वाग्भटमतानुसारेण रसायनेमेवं निर्दिशम्

**दीर्घमायुः स्मृतिर्मेधामारोग्यं तरुणं वयः**
**प्रभावर्णस्वरोदार्यदेहेन्द्रियबलोदयम्।**
**वाक् सिद्धिं वृषातां कान्तिमाप्रोति च रसायनात् ।।** - सु.सं. १ - १४

**एतद्दशानां नैकेषांरसायनानां निर्माणप्रयोजनादीनां विविरण-मेतत्सम्बद्धग्रन्येषु उपलभ्भयते।**

8) वाजीकरणम् (Virilification, Science of Aphrodisiac and Sexology) वीर्यशक्तयादेः प्रास्यर्थमभिवर्धनार्थं च विहिता चिकित्साप्रणाली वाजीकरणान्तर्गता। रशक्तिविरहितेभ्यः शक्ति-प्रदानमेव अस्याः महदुद्देश्यम्। वीर्यहीनत्वनिवृत्तये इन्द्रियपुष्ट्यर्थं च नैकानि औषधद्रव्याणि संसूचितानि। स्त्रीणां वन्ध्यात्वहरण-चिकित्साधि अत्रैवान्तर्गता। कामशास्त्रं वाजीकरणस्यैय भागः। स्वास्थ्यघातफलम्पटतां अतिकामुकतां च विहाय कामपुरुषार्थस्य सम्यगुपभोगाय मार्ग दर्शयति कामशास्त्रम्।

9) आयुर्वेदस्याङ्गत्वेन अङ्गरूपचिकित्सा (Plastic or Cosmetic Surgery)

गर्भविज्ञानम् (Gynaecology) भ्रूणविज्ञानम् (Embryology) शारीरिकरूपगुणानां आनुवंस्यविज्ञानाम् (Heredity) रासायनिक-विज्ञानम् (Chemistry) वनस्पति विज्ञानादीनि (Botany) निरूपितानि सन्ति।

**भौतद्रव्यस्य उगमः कथं इति तैतरीयोपनिषद्, ब्रह्मानंदवल्यां एक उक्तिः अस्ति।**

**द्रव्यस्य उत्पत्तिः तस्माद वा एतस्मादात्मनः अकाशः सम्बुतः। आकाशद्वायुः। वायोराग्नी । अग्निरपः । अद्भ्यः पृथिवी।।**

- तैत्तिरीय उपनिषद्, ब्रह्मानन्दवल्यां प्रथम अनुवाकः परमहेतो आकाशः संभूतः आकाशात् वायोः । आग्नेः आपः, अन्द्धः पृथिवी एवं भौतद्रव्यस्य उगमस्य वर्णम् ऋतम् अस्ति। आरंभे प्लास्मा भवति अनंतरम् वायुः तदनंतरं शक्ति, द्रव्य द्रव्यम्, घनद्रव्यम् आविंभुवम् इति ।

आदुनिक भौतशास्त्रम् वदति- भौतद्रव्यस्य शक्तेः स्थित्यन्तर सामर्थ अस्ति इति एतत् सूच्यते ।

बहुदिर्घकालं वैविक्रमयम् तथा संपत्भरितम् नागरिकद्यायाः प्रेंका रूपं तंत्रज्ञाने तथा विज्ञानविषये उदग्रंथाः रचिताः भारतं पूर्व एकदा अग्रेसर आसित्।

परं वैदिशिक आक्रमणं कारणात् निरंतर च राष्ट्रशक्तेः ह्रासः संजाताः भौदवैशम्य संघर्ष अमूल्य विज्ञान परंपरा लुप्ताभावत् ।

**उपसंहारः**

बहुदिर्घकालं वैविध्यमयम् तथा संपत्भरितम् नागरिकतयाः उच्चैः स्थितिः तंत्रज्ञाने तथा विज्ञानविषये उदग्रंथाः रचिताः भारतं पूर्व एकदा अग्रेसर आसित् ।

परं भारतात् बहिः आक्रमण कारणात् निरंतरं च राष्ट्रशक्तिः क्षिणजता। अस्माकं अनेक कारणैः अमूल्य विज्ञान परंपरा नष्टाजाता। मध्ययुगे युरोप मध्य विज्ञान वृद्धिकाले भारतस्त विज्ञान परंपरायाः तंत्रज्ञानस्य च संस्कृत ग्रंथ अन्यभाषाया ग्रंथाच्य च पाश्चात् पंडितानां, विज्ञानिनां मनसि न आगतं, स्वातन्त्र्या नंतर कालेपि विज्ञानस्य तथा तंत्रज्ञानस्य च पश्चिम देशेभ्यः अल्पमूल्येन ग्रहणस्य च परीपाटी अधिका जाता। पूर्वजैः निरूपितायाः आधार शिलायां उपरि विज्ञानसौधस्य निर्माणस्य स्वरूपं विस्मृतः इतः परम् पुनः प्राचीन विज्ञान विषयाः स्वीकरणियाः सन्ति।

**ग्रंथ सूचिः**

१. Hemmeya vijanana parampare (Kannada) A glimpse into scientific Heritage of India. Publisher - Samskrit Bharati. 3rd edition 2017.
२. Science In Sanskrit. Samskrit Bharati. New Dehali.
३. Pride of India Samskrit Bharati. New Dehali
४. "शोध प्रारूप" (कन्नड) डॉ. बी.वी. शिरुर, अन्नपूर्णा प्रकाशन, हुबली.



National Journal of
Hindi & Sanskrit Research

ISSN: 2454-9177
NJHSR 2024; 1(52): 65-70

www.sanskritarticle.com

**नवीनशास्त्री रा. पुराणिकः**
शोधच्छात्रः,
कर्नाटकसंस्कृतविश्वविद्यालयः,
चामराजपेटे, बेङ्गलूरु-१८, कर्नाटक

**शोध निर्देशक**
**डॉ.एम् वि जयरेवण्णः**
विद्वान्,
कर्नाटकसंस्कृतविश्वविद्यालयः,
बेङ्गलूरु -१८, कर्नाटक

**Correspondence:**
**नवीनशास्त्री रा. पुराणिकः**
शोधच्छात्रः,
कर्नाटकसंस्कृतविश्वविद्यालयः,
चामराजपेटे, बेङ्गलूरु-१८, कर्नाटक

# संस्कृत-वाङ्मये वर्णित प्राणिविज्ञानम्

**नवीनशास्त्री रा. पुराणिकः, डॉ.एम् वि जयरेवण्णः**

जगहिताय बद्धस्पृहा भारतीय-संस्कृतिश्चिरन्तनकालादेव अनेककलारत्नावलीसमलंकृता विविधाश्च विद्याः परिपोषयन्ती जगदुरु-पदवीमारूढा दिव्यश्रिया चाद्यापि देद्युत्यते। सा च सनातनसंस्कृतिः प्रतनसमयादिदानीमपि संस्कृत-साहित्य-मुकुर- मात्रासु प्रतिबिम्बिता दरीदृश्यते । तासु च विविधासु विद्यासु प्राणिविज्ञानमन्यतममन्तरङ्ग-सरणिमवगाहितमिति तु विवादविहीनोऽयं विषयं। गजशास्त्रं, तुरङ्गमशास्त्रं, पशुपक्ष्यादीनां विज्ञानं इत्यादिशास्त्रीय- ग्रन्थेषु तेषां प्राणिनां लक्षणानि, जातिवैचित्र्यं, आहारविहारादि- स्वभावांशाः, मानवैः सह तेषां सम्बन्धादि-विषयाः समृद्धं समुपलभ्यन्ते। ते चांशाः काव्यनिर्माणहेतुघटकत्वेनैवोपदिश्यन्ते "लोकशास्त्रकाव्याद्यवेक्षणात्" इत्यादिना। तेन च गद्य-पद्य-चम्पू-नाटकादिविभक्तेषु काव्येषु प्रतिबिम्बितं प्राणिविज्ञान सहजमेव विवृतं परिदृश्यते। प्राणिभिर्विना मानवजीवनमपूर्णमित्येवोपलक्ष्यते । तेषां प्रभावः मानवजीवने कियदवतारितश्चेति तत्र तत्र काव्येषु स्फुटं विव्रीयते । ते चांशाः रमणीयार्थप्रतिपादकैः पदैः सह कथमुपनिबद्धाः सन्तीति लेखेऽस्मिन् समासेन प्रतिपिपादयिषत्ययं जनः।

वेदेषु तावत् पुरुषसूक्ते हयः गावश्च आजावयः अन्येऽपि प्राणिनः सृष्टिसमये यज्ञादेव समुत्पन्ना इति निगद्यते। तथाहि - तस्मादश्वा अजायन्त येकेचोभयादतः। गावो ह जज्ञिरे तस्मात् तस्मात् जाता अजावयः। (पुरुषसूक्तम्)

अत्र जगतः सृष्टिरूपाद्यज्ञात् सर्वे समुत्पन्ना इत्येव सूच्यते। अश्विनौ तावत् देववैद्यौ एकदा निवृत्तप्रसवां वृद्धां गां विशिष्ट- दिव्यौषधीभिः पुनश्च प्रवृत्त-प्रसवां अचीकरन् अहोस्वित् तस्यां क्षीरं अपूपुरन् इति प्राणिविज्ञानस्य सूच्यांशं बुबोधयिषति एका ऋक् । तथाहि - यावत ध्यामपिन्वतमपो न स्तर्य चिच्छक्त्य श्विना शचीभिः।

उपनिषत्स्वपि केषुचित् तत्वावबोध्यांशानां निरूपणसन्दर्भेषु दृष्टान्त-ग्रहणे प्राणिनां-विज्ञान विषयांशान् सुसूचयिषन्ति कवयः।

वाक्यशेषात्तु अत्र प्रकृतिवचनता परिगृह्यते यथोर्णनाभिः सृजते गृण्हते च।

"(मुण्डक) इत्येवं जातीयकात् । (शां. भाष्यम्- ब्र.सू. १- ४) इति ऊर्णनाभिः लालां विसृजति पुनश्च उपसंहरतीत्ययमंशः विज्ञानविषयाक्रान्त एव। अश्वानां स्वभाव-विषयोऽपि "दुष्टाश्वा इव सारथिः" इति रथरूपकनिरूपणे सूचितः। रामायण महाकाव्येऽपि कैकेय्याः मातुः स्वभावनिरूपणावसरे तस्याः भर्ता पिपीलिकानां भाषां जानाति स्मेति सूचयति। ताश्चापि परस्परं संलपन्त्यः आसन्, यच्च केकयेन्द्रः श्रुत्वा अहसत् । तदा कैकेय्याः माता हठेन हासस्य कारणं भर्तुः प्राणपणैरपि जिज्ञासमाना तमपृच्छत्। हताशश्च सः पिपीलिकाभाषणं निगद्य दिवंगतः इति श्रूयते। रामो ऽपि सीतापरित्यागानन्तरं अश्वमेधेन

**यियक्षमाणः अश्वं प्रेषयामास । तस्य युयोः लक्षणानि एवमुदीर्यन्ते वासिष्ठरामायणे।**
**कालोम्बोधरसंकाशः स्वर्णवर्ण-मुखो बली। यस्य पार्वा उभावर्धचन्द्राकारौ सुशोभनौ।।**
**पुच्छ विद्युत्-प्रतीकाशं सुन्दरं कुन्दसन्निभम्। पादाश्चैव हरिद्वर्णाः कर्णौ सिन्दूरसन्निभौ।।**

**विराजितो रोमराज्या सानुलोम-विलोमया। विचित्रैर्विविधैर्वर्णैश्चित्रो रजतबिन्दुभिः।।**

**यो वेगे वायुतुल्यः स्यात् उच्चैरुच्चैःश्रवा यथा। यस्य गात्रोद्भवो गन्धो गन्धर्वमपि मोहयेत् ।।**

**एवंलक्षणसंयुक्तो यज्ञियः पशुरुच्यते ।-** (वासिष्ठ रामायणम्)

एतादृश-विचित्र-वर्णविन्यास-समन्वितो वाजिरत्यन्तमेव दुर्लभः। तत् सम्पादनार्थं तद्वर्ण-विशिष्टवयवयुतः काष्ठे निर्मितः अश्वस्य गर्भधारण समकालमेव तस्य पुरतः संस्थाप्यते चेत् तस्य बिम्बाकृतिर्गर्भे प्रतिबिम्बिता तत्-सदृश-वर्णाकृतिरेव हयः समुत्पद्यते इति सम्प्रदायविदां परिक्रमः श्रूयते। अयं च प्रशंसनीयः प्राणिविज्ञानांश इति तु गमनार्हो विषयः।

महाभारते तु नलमहाराजः हयहृदयज्ञः इत्येव प्रसिद्धः। एकस्यामेव क्षणदायां योजनशतं वेगेन चंक्रमिषुर्नलमहाराजःऋतुपर्णस्य मन्दुरे अन्विष्यान्विष्य शास्त्रोक्त-लक्षणान्वितान् घोटकान् रथे नियोजयामासेति गम्यते। तथाहि-

**तेजोबलसमायुक्तान् कुलशीलसमन्वितान् ।**

**वर्जितान् लक्षणैर्हीनैः पृथुप्रोथान् महाहनून्।।** शुद्धान् दशभिरावतैः सिन्धुजान् वातरंहसा (महाभारत-१०९)

यद्यपि द्रष्टुं दुर्बला इव लक्ष्यन्ते एतैर्लक्षणैर्युताश्चाश्वाः तथापि सत्त्वबलान्विताः भवन्तीत्यवगम्यते। इदमेव रहस्यं जानन् नलमहाराजः बाहुकवेषे स्थितः तादृश लक्षणान्वितान् नियुज्य वेगातिशयेन दिधावयिषति। अश्वानां अवयवेषु आवर्तानां संख्यया तेषां सत्त्वं निर्णेतुं शक्यते। तदेवोच्यते महाभारते नलमाराजेन-

**एको ललाटे द्वौ मूर्ध्नि द्वौ द्वौ पार्श्वोपपार्श्वयोः। द्वौ द्वौ वक्षसि विज्ञेयौ प्रयाणे चैक एव तु।** (महाभारते -वन-७१-९६)

नलोपाख्यानव्याख्याने तावत् इमान्येव दशलक्षणानि प्रकारान्तरेण निगद्यन्ते-

**सृक्किण्यां च ललाटे च कर्णमूले निगालके। बाहुमूले गले श्रेष्ठः आवर्तास्त्वशुभाः परे ।।** (अग्निपुराणं-१८९)

ह्रस्वकर्णदीर्घग्रीवादिलक्षणानि तावत् शुभलक्षणानि, नृपाणां विजयसाधकानीति परिकल्प्यन्ते । तथाहि-

**दीर्घग्रीवाक्षि-कूटाश्च ह्रस्वकर्णाश्च शोभनाः।**

**राज्ञां तुरङ्गमा यत्र विजयं वर्तते ततः।।** (अग्निपुराणं १८९)

गद्यसाम्राज्यचक्रवर्तिना महाकविबाणभट्टेन तावत् कादम्बर्या इन्द्रायुधवर्णनावसरे सूक्ष्मातिसूक्ष्मविषया अपि ये वर्णितास्ते तु अश्वशास्त्रीयविज्ञानांशघटका एवालोक्यन्ते । तथाहि-

पृथुभिः खुरपुटैर्जर्जरित-वसुन्धरैः..उत्कीर्णमिव जंघासु, विस्तारितमिवोरसि, श्लक्ष्णीकृतमिव मुखे प्रसारितमिव कन्धरायां, उल्लिखितमिव पार्श्वयोः, द्विगुणीकृतमिव जघन-भागे, अत्यायतमतिनिर्मासतया, समुत्कीर्णमिव वदनमुद्वहन्तम्।

भवभूतिरपि-उत्तररामचरिते अश्वमेधीयघोटकस्य वर्णने कानिचित् हयसामान्यलक्षणानि सुसूचयिषति।

तथाहि-

पश्चात् पुच्छ वहति विपुलं तश्च धूनोत्यजस्रम् दीर्घग्रीवः स भवति खुरास्तस्य चत्वार एव तुरङ्गमाणां स्वभावविज्ञानं माघकविः स्वभावोक्त्यलंकार-पुरस्सरप्रत्तिपिपादयिषति। यमुनानदीमवलोक्य कथं ते हयाः विविधाभि श्रेष्टाभिः स्वीयं स्वभावं प्रकटयामासुरिति एवं वर्णयति।

**प्रोथैः स्फुरद्भिः स्फुटशब्दमुन्मुखैस्तुरङ्गमैरायतकीर्णवालधि।**
**उत्कीर्ण मुद्राहितधीरकन्धरैरतीर्य्यताग्रे तदद्त्तदृष्टिः।।**

(माघ-१२-७३)

तुरगाणां कर्णयोश्चालनबविधौ विविधाश्च भावास्त्वन्तर्गता भवन्तीत्येव संस्कृतकवीनामभिप्रायः प्रकट्यते । तथाहि-

तुरंगैरुत्तरङ्गाक्षैः स्तब्धकर्णैः निरीक्षितम्। (चन्द्रालोकः)

शाकुन्तल-नाटकेऽपि द्रुततरगत्या दिधावयिषवो वीतयः निभृतोर्ध्व-कर्णाः धावन्तीत्येवं वर्णयति ।-

मुक्तेषु रश्मिषु निरायत-पूर्वकायम् निष्कम्प-चामरशिखा निभृतोर्ध्व-कर्णाः । इति (१-९)

बाणभट्टकविना च इन्द्रायुधस्य वर्णनावसरे हयानां स्वभाव-विज्ञानांशाः मनोज्ञ सूच्यन्ते । तथाहि " चटुलशिरःकेसरसटाहत्या अकूणिता केकरतारकेण तिर्यक् चक्षुषा विलोक्य मुहुर्मुहुस्ताडयता क्षितितलम्...।...अतिदूरमवनमतो प्रतिक्षणमतिदूरमुरन्नमता च ..."।

शाकुन्तले नाटके तावत् "तावदार्द्रपृष्ठाः क्रियन्तां वाजिनः" इति तुरङ्गमाणां विश्रान्तिसरणिर्वा अध्वपरिश्रान्ति-निवारणोपायः सूच्यते यत्र पानीय-सेचनेन वीतयः व्यपनीताध्वक्लमा भविष्यन्तीति सूच्यते। स एव अयनायासनिरासः प्रकारान्तरेण क्रियते तुरङ्गमाणामिति बाणकविना अच्छोदसरोवररोधसि इन्द्रायुधेन यद्विहितं तदेव वर्ण्यते । क्षतितल - लुठितोत्थितम्... । केवलं धरातले लुठन्तः पृष्ठेन भूमिस्पृशन्तः मार्गायसं निरायासमेव निरस्यन्तीति निगद्यते ।

हयानां चिकित्सा विषयेऽपि केचन विज्ञानांशाः तत्तत्सन्दर्भे निरूप्यन्ते संस्कृत कविभिः। पञ्चतन्त्रे तावत अपरक्षितकारके विस्यांश्चित् कथायां आश्रयाशेन पीडितानां हयानां चिकित्सार्थ प्लवगानां बसथा अत्यधिकं प्रयोजनमस्तीति सुस्पष्टं निर्वक्ति।

कपीनां मेदसा दोषो वन्हिवाहसमुद्भवः। अश्वानां नाशमभ्येति तमःसूर्योदये यथा ।। -(पञ्चतन्त्रम्-५-७५)

अपि च अश्वानां वातादिदोषप्रशान्तये मधुनः वचाकर्दमश्च निवारणोपायत्वेन परिगण्यते। पञ्चतन्त्रस्य टीकायां अयमंशः सूचितोऽस्ति । तथाहि- "मधुयुक्तो यः कर्दमः वचाकर्दमः तेन... उक्तं हि वैद्यके अश्वानां वातादिदोषशान्तये मधुयुक्तवचादिचूर्णस्य पङ्कस्तेन तनुलेपनम् ।" (P.V. Kane पञ्चतन्त्रम् Notes-207)

भूलोकमल्ल इति ख्यातेन सोमेश्वरमहाराजेन (1100 A.D.)

स्वीयमानसोल्लासनामके विषयाणां रत्नाकर इव विराजमाने ग्रन्थे अनेकेषां
प्राणिनां पशुपक्षिणां च जीवनसरणिरुपवर्ण्यते। राज्ञां तावत् वीतयस्तुसर्वव्यवहारसाधकत्वात् विशेषेण प्रतिपाद्यन्ते। तत्र तावत् हयानां सर्वविध-शूलानां शमनार्थं वचाहिंगचूर्णेन साधितं, अथवा
गुडशुण्ठीमेलनेन सम्पादितमौषधं जीवनौषधमिव परिगण्यत इति सुलभोपचारः प्रकीर्त्यते । तथाहि-
वचाचाहितविषाहिंगुचूर्णमेतैः प्रकल्पितम्। पलार्धं सुरयायुक्तं सुराप्यर्धाढकान्विता ।। क्रमोऽयं सर्वशूलानां शान्तये परिकीर्तितः गुडेन सहितां शुण्ठीं केवलां वा प्रयोजयेत्। (मानसोल्लासः ६-५९१-५९२)
सौन्धवानां परिपोषणपरिक्रमोऽपि विधीयते सोमेश्वरमहाराजेन। तथाहि-
दुर्वादियवसैरश्वान् खादनैश्चणकादिभिः। स्नेहैर्घासादिकैर्भोज्यै रसैश्च परिपोषयेत् । (मानसोल्लासः ६-५७७)
तुरङ्गमास्तु काम्बोजदेशे अतीव प्रसिद्धाः सन्तीति प्राचीन कालादेव प्रतीतिरस्ति । अत एव भासमहाकविः कर्णभारनाटके अश्वानां वर्णनं स्वभावोक्तिसमन्वितं समासेन एवं संजिघृक्षति-रवितुरगसमानं साधनं राजलक्ष्म्याः सकलनृपतिमान्यं मान्यकाम्बोज-जातम् सुगुणमनिलवेगं युद्धदृष्टापदानं....।। (कर्णभारः १९)

संस्कृत-साहित्ये कोमलशरीराणां मृदुस्वभावानां भयशीलानां कुरङ्गाणां व्याप्तिविशेषतश्च दृष्टान्तग्रहणे बहुविधा दृश्यते। रामायणे सुवर्णहरिणः सीतापहरणस्य निदानमभूदिति विदितवृत्तान्त एव। महाभारतेऽपि कश्चिन् मृगः यज्ञस्य अरणिमपाहरत् यश्च चरमे युधिष्ठिरस्य समवर्तिना सह प्रश्नोत्तरमालिकायाः प्रसङ्ग समुपन्यस्तवान्। कृष्णसारमृगाः यत्र निर्विशङ्क सञ्चरन्ति सा तपोभूमिः प्रशस्तेति परिगण्यते। तथाहि - "विश्वासोपगमाद-भिन्नगतयः शब्दं सहन्ते मृगाः" (शाकुन्तलम्-१) मृगयार्थं प्रस्थितस्य दुष्यन्तस्य स्यन्दनं दर्श दर्श रथिनमधिज्यधन्वानं स्मारं स्मारं भयाक्रान्तः कण्वाश्रममृगः धावं धावं स्वस्वभावं कथं प्रदर्शयति स्मेति कालिदासीय मधुरपदावलीषु एवं गृह्यते-ग्रीवाभङ्गभिरामं मुहुरनुपतति स्यन्दने बद्धदृष्टिः पश्चार्धेन प्रविष्टः शरपतनभयात् भूयसा पूर्वकायम्।। दर्भेरर्धावलीढैः श्रमविवृतमुखभ्रंशिभिः कीर्णवर्मा पश्योदग्रप्लुतत्वाद् वियति बहुतरं स्तोकमुर्व्यां प्रयाति ।।

(शाकुन्तलम् - 1 - ८)

कुमारदासोऽपि जानकीहरणे दशरथस्य मृगयाविनोदवर्णनावसरे कुरङ्गाणां भयचांचल्यादि पिशुनं नेत्रं श्लोकेऽस्मिन् एवं विशदयति-
**उत्कर्णमुत्पुच्छयमानमासम् विदर्शिताभ्याहत कन्दुकोत्थम्।। पारिप्लवाक्षं मृगशाववृन्दम् ईषन्निपातेन शरेण राजा।।**

(जानकीहरणम् - । - ५४)

चम्पूरामायणेऽपि पाण्डुराजोऽपि भयविह्वलाः मृगाः कथामितस्ततो धावमानाः राज्ञे मोददानकुशलाः सन्तीत्येवं निगद्यते "कुरङ्गयूनां कुरुते स्म भीतिम्।" इङ्गुदीतैलं कुरङ्गाणां अवयवेषु क्षतिनिवारणार्थं उपयुज्यते स्मेति कालिदासीयाभिज्ञानशाकुन्तले एवं न्यगादि-

यस्य त्वया वृणविरोपणमिङ्गुदीनाम् तैलं न्यषिच्यत मुखे कुशसूचविद्धे। शामाकमुष्टिपरिवर्धितको जहाति सोऽयं न पुत्र कृतकः पदवीं मृगस्ते ।। (शाकुन्तलम् - ४)

एवं शामाकैर्वा तृणधान्यैः हरिणाः परिपुष्यन्ते स्मेत्यपि विशेषांशः सूचितोऽस्त्यत्र।हरिणमिथुनयो: रागासक्ति, परस्परप्रे मरसाभिव्यक्ति-क्रियाकलापाश्च रसेश्वरेण कालिदासेन शाकुन्तल नाटके सूचिताः सन्ति-

**श्रृङ्गे कृष्णमृगस्य वामनयनां कण्डूयमानां मृगीम्** (शाकुन्तलम् VI - १७)

**जानकीहरणे अपि क...कुमारदासेन प्रकारान्तरेणायमंशः चित्रायते। "अन्योन्य-वक्त्रार्पित-पल्लवाग्रग्रासं नृवीरस्य कुरङ्गयुग्मम्।"** (१-५७)

कस्तूरीमृगः स्वनाभिकुहरे एव विन्यस्तां कस्तूरीं नैव जानाति, तस्य सुगन्धस्य मूलमन्वेष्टु मितस्ततो आहिण्डमानस्तिष्ठतीति कविभिर्वि-भाव्यते। परं स एव कस्तूरिकासुगन्धः तस्य मृगस्य मरणकारणं जायत इति पण्डितराजः कविर्जगन्नाथः विवदिषति-

**अयि बत गुरुगर्वं मास्म कस्तूरि यासीः । स्वजनकममुनैव प्राणहीनं करोषि ।** (भा- । - ६)

दिगन्तरेषु प्रसारितस्य कस्तूरिकागन्धस्य मूलं मृगयन्तः क्रूरप्राणिनः मृगं तं चिखादयिषन्ति। विषयस्यास्य विन्यास एव कवेः कौशलं प्रकारान्तरेण विषयान्तरप्रतिपादने च यशः शिखरं निनीषति भामिनीविलासे ।

गजशास्त्रे तावत् यानि गजलक्षणानि विव्रीयन्ते तेषु मदोदक-विशिष्टानां मदगन्धिगजानां वैशिष्ट्यं प्रशस्यते। मदोदकधारया भृङ्गानां सरणिरेव गण्डस्थलं समाश्लिष्यतीति कविभिरुपवर्ण्यते। मणयश्च कुम्भस्थले वरीवर्तन्त इति कवीनां समयः श्रूयते। युद्धे वैरिवारणानां हननेन ते मातङ्गाः मणिभिः समभेव प्रणेमुरिति उत्प्रेक्षते अश्वघोषः बुद्धचरिते शुद्धोदनस्य पराक्रमवर्णनावसरे। तथाहि-

**उद्वान्तमुक्ताप्रकरैः शिरोभिः भक्त्येव पुष्पांजलिभिः प्रणेभुः।**

(बु. च. -१-१७)

भासकविरपि कर्णभारनाटके उत्तमोत्तमजातिजातानां कुञ्जराणां लक्षणानि समासेन दिदर्शयिषति-तथाहि-

**मदसरितकपोलं षट्पदैः सेव्यमानम् गिरिवरनिचयाभं मेघगम्भीर-घोषम्। सितनखदशनानां वारणानामनेकम् रिपुसमरविमर्द।।**

-कर्णभारः २०

मदोदकस्य गन्धातिशयेन आयोधने विपक्षाश्रिताः सपत्नास्तु दूरापास्ता भवन्तीति तस्य गन्धगजस्य विशेषविज्ञानांशः एवं वर्ण्यते गजशास्त्रीयग्रन्थे -

**यस्य गन्धं समाघ्राय न तिष्ठन्ति प्रतिद्विषः । स वैगन्धगजः प्रोक्तः नृपतेर्विजयावहः ।।** इति

भूलोकमल्लः सोमेश्वरोऽपि मानसोल्लासे, अश्वायुर्वेदस्य तथा अश्वशास्त्रस्य च प्रमुखांशान् पृथगध्याये समासेन लिखति । तथैव गजशास्त्रस्यापि प्रवेकांशान् समृद्धमुपन्यस्यति। गजजातिभेदान् विलिखन् गजस्य शुभाशुभलक्षणानि निरूपयन् तेषु स रत्निसंख्यापरिमाणादिकं एवं निबध्नाति-

**सप्तरत्नि समुत्सेधो नवरत्न्यायतश्च यः दशरत्निपरीणाहः सगजो मानतः शुभः । कनिष्ठादपि यो हीनो वामनस्सनिगद्यते वामनादपि यो हीनः कुब्जो निन्द्यौ गजाविमौ ।।**

(मानसोल्लास ३-२२२, २२६)

वारणानां रदनाः नखराः, तालु, इत्यादीनां शुभपरिमाणादिकमपि बोधयति । सुस्निग्धौ रदनौ वृत्तौ दक्षिणश्च समुन्नत।

**अकृष्टं तालु ताम्र च दशाष्टौ नखराश्शुभाः।।** (मानसोल्लासः ३-२२६)

मतङ्गजाः सल्लकीपल्लवेभ्यः मृणालेभ्यश्च स्पृहयन्तीति गम्यते। विक्रमोर्वशीयनाटके तावत् अयमेवांशः समुल्लिखितः-

**अयमचिरोद्गत-पल्लवमुपनीतं प्रियतमा-ग्रहस्तेन अभिलषतु तावदा-सवसुरभिरसं सल्लकीभंगम्।।** इति (विक्रमोर्वशीयम्-IV-44)

गजेषु प्रियतमाप्रीतिर्वरीवर्तत इति मन्मन्यते कविभिः। "गजवत् स्नानमाचरेत्" इत्यादिना जलक्रीडायां ते अतिशयेनासक्ताः इत्यपि वर्ण्यते ।

**लीलोत्स्वात-मृणाल-काण्ड-कवलच्छेदेषु सम्पादिताः पुष्यत्पुष्कर-वासितस्य पयसो गण्डूषसंक्रान्तया। शोकश्शीकरिणा करेणविहितः कामं विरामे पुनः ...।** (उत्तररामचरितम् - ३-१६.)

कपित्तभक्षणे गजस्य वैज्ञानिकं वर्तते इति श्रूयते। इभानामिष्टसाधनानि वस्त्वन्तराण्यपि सोमेश्वरः सूचयति । स च करी कथं वा साम्परायिके प्रतिपक्षस्थितानां विपक्षाणां निबर्हणे शिक्षयितव्यः इत्यपि शिक्षासरणिः सुदीर्घ विव्रीयते । तथाहि-

**ततोऽङ्गधारणैः शिक्ष्यस्तज्ज्ञैः कर्मकरःकरी घासं चेष्टं गुडं शालिमिक्षुदण्डमथापि वा । एवं संशिक्षितो नागो वध्यावध्येषु कर्मसु जयत्येकोऽपि संग्रामे नरवाजिगजान् बहून् ।।**

(मानसोल्लासः ३-३१६, ३३०)

गजचिकित्सा विषयेऽप्यनल्पा एव विषयाः विधीयन्ते । विशेषेण वातदोषनिवारणार्थं अग्निमान्द्यादिरुक्परिहाराय च विविधाः औषधोपचाराः विधीयन्ते। तेषु च सौन्धवजीरकादीनां चूर्ण निम्बपल्लवानां, ज्योतिष्मतिगुडूचीनां च चूर्णं विशेषेण प्रशस्यते । तथाहि-

**सैन्धवं जीरकं दन्ती श्रङ्गवेरं फलत्रयम् करञ्जद्वितयं कृष्णापटोलं निम्बपल्लवाः । ज्योतिष्मती गुडूची च वासा चेति सुचूर्णितः पिण्डो मृद्दोहदं हन्ति वन्हिमाशु करोति च।।**

(मानसोल्लासः ६-६५८, ५९)

गजदन्तानां प्रयोजनानि तु असंख्येयानि। गजानां साहाय्येन महीरुहाणां काण्डान् स्तम्भादीन् बृहत्पाषाणादीन् च निनायिषन्ति इष्टार्थसाधनाय। तंजावूरु नगरे यत्प्राचीनमन्दिरं शिल्पकलानिर्मितं वर्तते, तस्य बृहत् शिखरं पार्थक्येन निर्माय आशिखरं राशीकृतमृत्सानामयनेन मतगजानां साहाय्येन च उपरि संस्थापितमिति शिलालेखनमद्याप्यवगम्यते। वारणानामयमपरः स्वभावः यत् कुम्भस्य-कण्डूशमनार्थं वृक्षाणां त्वचः उन्मथयन्तीति। कालिदासेनापि विषयोऽयं प्रस्तूयते रघुवंशमाकाव्ये। तथाहि- "कण्डूयमानेन कटं कदाचित् वन्यद्विपनान्मथितात्वगस्य" इति। सामान्येन सर्वेषां प्राणिनामयं स्वभावः वर्तत एव तथापि शक्तिबाहुल्येन वृक्षत्वक् उन्मथ्यत एव किन्तु तेषां गजानां स्वभावविशेषं सूचयति। परं गजानां गाम्भीर्य सर्वत्र प्रशस्यते। भर्तृहरिरपि शुनां गजानां च स्वभावभेदं निरूपयन्, गाम्भीर्य स्तौति। तथाहि-

**लाङ्गूल-चालनमधश्चरणावपातम् भूमौ निपत्य वदनोदरदर्शनं च। श्वा पिण्डदस्य कुरुते गजपुङ्गवस्तु धीरं विलोकयति चाटुशतैश्च भुंक्ते।।** (नीतिशतकम्-३२)

करिसिंहयोः वैरं जातवैरमित्येव परिगण्यते । अत एव "सिंहस्वप्नः" इति न्यायः प्रसिद्ध एव। समबलवतां आयोधने करिसिंहयोः सादृश्यं परिलक्ष्यते, परं सिंहस्यैव विजयः प्रस्तूयते । अत एव जगन्नाथ कविः भामिनीविलासे सिंहपोतः वनेऽस्मिन् वर्तते अतः हे - गजपोत कदापि तत्समीपं सञ्चरणसाहसं मा कार्षीः इत्युपदिशति । तथाहि-

गिरिगह्वरेषु गुरुगर्वगुम्फितो गजराजपोत न कदापि संचरेः ।।

एवं च स्तम्बेरम पञ्चाननयोः वैरं सिंहस्य च पराक्रमातिशयत्वं यथेच्छमन्योक्तिभिरुउपन्यस्यते जगन्नाथेन भामिनीविलासे ।

हंसस्य नीरक्षीरविवेकज्ञानं सर्वैः कविभिरभ्युपगम्यते यथासन्दर्भ च दृष्टान्तत्वेन जरीगृह्यते। "नीरक्षीरविवेकेहंसो हंसो बको बकः" इति सुभाषितकृदः यथेच्छ संगिरन्ते। जगन्नाथोऽपि भामिनीविलासे नीरक्षीर विवेकस्य संरक्षणे परिपोषणे च त्यक्तादरो मा भूः अपूर्वोऽयं सम्प्रदायः विज्ञानं वा परमेष्ठिना प्रदत्तमिति हितोपदेशमन्योक्तिना बुबोधयिषति । तथाहि-

**नीरक्षीरविवेके हंसालस्यं त्वमेव तनुषे चेत् । विश्वस्मिन्नधुना गोत्रव्रतं पालयिष्यति कः ।।** (भामिनीविलासः १-१०)

इदं विज्ञानं लोकेशेनाप्यपहर्तुं नशक्यत इति ज्ञानप्राशस्त्य निरूपणावसरे नीतिशतके भर्तृहरिणा एवं निगद्यते-

**नत्वस्य दुग्धजलभेदविधौ प्रसिद्धाम् वैदग्ध्यकीर्तिमपहर्तुमसौ समर्थः।**

- (नीतिशतकम्-१८)

पिकस्य तावत् विहगेषु पण्डिताजातिरिति कीर्त्यते । "वसन्तकाले प्राप्ते काकः काकः पिकः पिकः" इति पिकस्य पञ्चमस्वरकूजनं नानाविधं जेगीयते। सहकारकुसुममञ्जरीं प्राप्य कोकिलः स्वर्गीयसुखमेवानुबुभूषति। रसालसुमरसेनोन्मत्तः पिकः वसन्तं स्तुवन्निवानवरतमेवाविश्रान्तं चुकूजिषति । शैत्यातिशयेन समाक्रान्तः

पिकस्य कण्ठः संकुचन् गातुमक्षम एवावतिष्ठते इति भाति। रसालकुसुमरसेन च पुनरुद्धाटितकण्ठपटलः पिकः मधुरमेव गातुं प्रभवतीति कवयो मन्मन्यन्ते। पिकानां विज्ञानान्तरं कविभिः प्रशस्यते यत् ते स्वकपोतान् काकानां नीडेषु विन्यस्य निर्विशङ्कं परिपोषयन्ति। काकाश्च अज्ञानात् स्वार्थकाः इत्येव मत्वा परिपोषयन्ति। यदा च कूजनसामर्थ्यं समुद्भवति तावत् प्रवृद्धपक्षाः पिकशिशवः वियति निलीयन्ते । कालिदासस्तु पिकानामिदं विज्ञानं स्वीयनाटके स्त्रीनिन्दापरत्वेन योयुजीत्यभिज्ञानशाकुन्तलनाटके तथाहि-

**प्रागन्तरिक्षगमनात् स्वमपत्यजातम् अन्यैर्द्विजैः परभृताः किल पोषयन्ति ।-** (शा०: ५)

गौस्तावत् भारतीयसंस्कृतौ धराधिष्ठिता देवतेत्येव परिभाव्यते। "गवां च परिवासेन भूमि शुद्धयति सर्वदा" इति मनुस्मृतिवाक्येन तस्याः पावित्र्यं वातावरण-शुद्धिकारणगुणः आरोग्यपोषकत्वं, अमृतायमानं क्षीरं इत्यादयः सगुणाः सर्वत्र जेगीयन्ते। आयुर्वेदीय ग्रन्थे तावत् मुनयः गोमयस्य च सिद्धौषधपदं दित्सन्ति। गोमयस्य कायशोधक गुणधर्मस्तु नितरां प्रशस्यते धर्मशास्त्रकारैः आयुर्वेदीयमनीषिभिश्च । तथाहि-

अग्रमग्रचरन्तीनामोषधीनां वने वने । तन्मे रोगांश्च शोकांश्च नुद गोमय सर्वदा ।

(उत्सर्जनविधिः)

गोक्षीरस्य गोघृतस्य च अवर्णनीयं स्थानं देदीयते आरोग्यक्षेत्रे। तृणादीनां तासां परिपोषसरणिः प्रसिद्धत्वात् विज्ञानपथं नावतरति तथापि प्रकारान्तरेण तासां स्वभावजातं विवरणयिषन्ति कवयः। तथाहि-

**आस्वादवद्भिः कवलैस्तृणानाम् कण्डूयनैर्दशनिवारणैश्च अव्याहतैः स्वैरगतैः स तस्याः सम्राट् समाराधन-तत्परोऽभूत्** (रघुवंशम्-11)

प्रति चिकंसया मार्जारः स्थिरमुपविष्टः। जनाश्च तं मार्जारमपि कृत्रिममित्येव मन्यन्ते स्म । तथाहि-

**चिक्रंसया कृत्रिमपत्रिपङ्कतेः कपोतपालीषु निकेतनानाम्। मार्जारमप्यायत-निश्चलाङ्गं यस्या जनः कृत्रिममेव मेने।।** (माघ-111-51)

रामायणेऽपि हनुमान् रावणस्यावरोधे मण्डोदरीं सीतां मन्यमानः आनन्दबिन्दुनिष्यन्दि-हृदयारविन्दे यान् भावान् समपीपुरत् तेषां प्रभावः तस्य चेष्टासु कथं प्रतिस्फलित इति तु वाल्मीकिकविपुङ्गवस्य चारुपदसरण्यां जेगीयते । तथाहि-

**आस्पोटयामास चुचुम्ब-पुच्छम् ननन्द चिक्रीड जगौ जगाम। स्तम्भानरोहन्निपपात भूमौ निदर्शयन् स्वां प्रकृतिं कपीनाम्।।** (सुन्दरकाण्डः-11-54)

अपि च सामान्येन कवीनां वर्णनाविषयैरधिक्रान्तः प्राणी कुरङ्ग इत्यवलोक्यते। मृदुहृदयवतां कविहृदयानां मृदुशरीरवतां वातायूनां विलासक्रियाः प्रथमोपस्थितिं भजन्ते।

श्रीशंकराचार्या अपि विवेकचूडामणिग्रन्थे पञ्चप्राणिनः स्वस्वभावगुणानुसारेण कथमापदि निगृह्यन्त इति प्रतिपिपादयिषन्ति यत्र तेषां प्राणिनां स्वभावांशाः सूचिताः सन्ति। कुरङ्गः शब्देन, मातङ्गाः स्पर्शन, मीनाः रसेन, पतङ्गाः रूपेण, भृङ्गः गन्धेन च (कमले) निबद्धा भवन्ति। पञ्चैरपि गुणैः समन्वितः पञ्चजनः कथं विषयैः न जरीगृह्यते ।

**शब्दादिभिः पञ्चभिरेव पञ्च पञ्चत्वमापुः स्वगुणेन बद्धाः।**
**कुरङ्ग-मातङ्ग-पतङ्ग-मीनाः भृङ्गा नरः पञ्चभिरश्चितः किम् ।।**

**वृद्धचाणक्य इति ग्रन्थस्य षष्ठभागे प्राणिसमुदायात् शिक्षयितव्यानां सरणिरेव प्रतिग्राह्यते। विंशतिनीतिकणांस्तावद् विविधेभ्यः प्राणिपक्षिभ्यः संजिघृक्षति वृद्धचाणक्यः ।**

**तथाहि-सिंहादेकं बकादेकं शिक्षेत् चत्वारि कुक्कुटात् । वायसात् पञ्च शिक्षेत षट् शुनस्त्रीणि गर्दभात् ।।** वृद्ध चाणक्य-६

यत्किमपि कार्यमल्पमनल्पं वा भवतु, जागरितः सन् सर्वविध-सज्जी- भावेन तत् कार्यं सिंहः यथा सिषाधयिषति तथैवास्माभिः सर्वविध प्रयत्नेन कार्यजातमल्पमपि वा भवतु तत्साधनीयमिति नीतिरेका सिंहात् शिक्षयितव्या। इन्द्रियनिग्रहेण चातुर्येण व बकवत् (मीनग्रहणादि कार्यवत्) ध्येयं साधयेदिति नीतिरपरा बकात् संग्राह्या।

तथाहि- **प्रभूतं कार्यमल्पं वा यो नरः कर्तुमिच्छति।**
**सर्वारम्भेण तत्कार्यं सिंहादेकं प्रचक्षते ।।**
**इन्द्रियाणि च संयम्य बकवत् पण्डितो नरः ।**
**देशकालबलं ज्ञात्वा सर्वकार्याणि साधयेत् ।।** (तत्रैव)

सदा जागरिता भूत्वा, युद्धाय वा चातुर्येण सन्नद्धः सम्भूय स्वयमेव सन्दर्भस्यानुकूल्यं विधाय प्रयोजनकारकं प्रसङ्गं समवलोक्य आक्रमणं कृत्वा इष्टं यथा साधयति कुक्कुटः, तथैव च इष्टसाधने, भोग्यस्यासादने च तदेकचित्तः सन् नरः प्राप्यं समासादयेत्। बन्धुषु च संविभागक्रियया तेभ्योऽपि हितं कुर्यादित्यादि व्यवहारांशान् चरणायुधात् शिक्षेत् ।

तथाहि-प्रत्युत्थानं च युद्धं च संविभागं च बन्धुषु । स्वयमाक्रम्य भुञ्जीथ शिक्षेत् चत्वारि कुक्कुटात् ।।

१.कुक्कुटयुद्धं च प्रसिद्धमेवास्ति, विशेषतश्च ग्रामीण मनोरञ्जनकार्यक्रमेषु तदावलोक्यते ।

एवमेव वायसात्, पञ्च, शुनश्च षट्, गर्दभाच्च त्रीणि शिक्षेदिति वृद्धचाणक्यस्तेभ्यश्च प्राणिभ्यः विज्ञानगुणान् शिशिक्षिषते । तथाहि-गूढमैथुनधाष्र्ये च काले काले च सङ्ग्रहः । अप्रमत्तमविश्वासः शिक्षेत् पञ्च च वायसात् ।। बह्वाशीः स्वल्पसन्तुष्टः सुनिद्रो लघुचेतनः।

**स्वामिभक्तश्च शूरश्च षडेते श्वानतो गुणाः।।**
**सुश्रान्तोऽपि, वहेत् भारं सन्तोषं न च पश्यति।**
**सन्तुष्टश्चरते नित्यं त्रीणि शिक्षेच्च गर्दभात्।।** वृद्धचाणक्यः- ६

एवं रीत्या वृद्धचाणक्यग्रन्थस्य कर्ता तु पशुपक्षिणस्तावत् गुणविषयान् लिलक्षयिषति। एवं चैते विज्ञेया विज्ञानगुणांशाः जीवनेऽस्माकं, विशेषतश्च राजकीयक्षेत्रे, आर्थिकक्षेत्रे च मार्गदीपा इव मार्गदर्शकाः सन्तीत्यत्र न सन्देहस्पन्दोऽपि ।

भारतीयज्ञानव्यवस्थायां जीवानां 'जीवानां' 'चल' च द्वौ विशिष्टौ विभागौ स्तः । प्राथमिकपदे यत्किमपि जीवस्य एतानि पञ्चविधं ज्ञानं भवति - शब्दः, स्पर्शः, रूपः, रसः, गन्धः च - सः 'साजीवः' इति कथ्यते । भारद्वाजभृगुऋषिसंवादे वनस्पतयः एतानि पञ्चविधं ज्ञानं धारयन्ति अतः जीवाः इति स्पष्टतया उक्तम् । एतत् अग्रे द्रष्टुं शक्यते । यद्यपि वनस्पतयः प्राणाः सन्ति तथापि ते निश्चलाः भवन्ति - अतः ते 'स्थावर' = नियतम् इति उच्यन्ते । (स्थिरता) ९.

परे भूतानां गतिस्तथा पञ्चेन्द्रियाणि । सम्पूर्णः जीवजन्तुः - पशवः, सरीसृपाः, पक्षिणः अस्य समूहस्य अन्तर्गताः सन्ति ।

अस्य वर्गस्य विशेषं वैशिष्ट्यं तेषां गतिः । अतः एते जङ्गम = चर = पशवः इति उच्यन्ते । (गच्छति )

तृतीयस्तरस्य सत्तायाः पूर्वोक्तपञ्चेन्द्रियाणि च गतिशक्तिः तथा च 'चिन्तनशक्तिः' भवति ।

मनुष्य = मनुष्य

भारतीयज्ञानव्यवस्थायाः अन्यत् वैशिष्ट्यं शास्त्रेषु उक्तसिद्धान्तानां ज्ञानस्य आवश्यकता अस्ति । यथा तारका, मामन्से, वेदान्तेषु च उक्तं, प्रकृतेः पञ्चतत्त्वानां परिचयाय, वर्गीकरणाय च पञ्चेन्द्रियाणि प्रयुज्यन्ते ।

भूताः ------ गुणाः

1. आकाशः। ----- शब्दः
2. वायु ----- शब्दः + स्पर्शः
3. अग्नि ---- शब्दः + स्पर्शः + रूपः
4. जल - शब्दः + स्पर्शः+ रूपः +रसः
5. पृथिवी - शब्दः + स्पर्शः + रूपः + रसः + गंधं

→ वनस्पति जगत् (वनस्पतिविज्ञानम्) तथा

→ पशुजगत् (प्राणीविज्ञान) .

प्राणिविज्ञानम् - पशूनां वर्गीकरणम्

जङ्गमः खल्वापि चर्तुविधः जरयुजन्दजस्वेदाजोद्धिज्जः ।

तत्र पशु-मनुष्य-वलदयो जरयुजः खग-नाग-सरीसृप-प्रभृतयः अण्डजः क्रुमि-कीता-पिपीलिका-प्रभृतयः स्पेदजः इन्द्रगोप-माण्डूक-प्रभृतयः उद्दिजः ॥

चतुर्विधाः पशवः ।

गर्भाशयः - गर्भात् जातः । यथा : मनुष्यः, व्याघ्रः इत्यादयः पशवः।

अण्डः - अण्डात् जातः । यथा : पक्षिणः, सर्प इव सरीसृपाः, .

स्वेदजः - स्वेदात् जातः । यथा : मधुमक्षिका, कृमिः इत्यादयः कीटाः।

मानवजीवनस्य अविभाज्याङ्गान्येवेति प्रतिपिपादयिषया तेषु इमान् उद्भिजः- विभक्ताः प्राणिनः यथा इन्द्रगोपकृमि, मण्डूकाः इत्यादयः।

शब्दशः

जरायु + ज =

गर्भात् जातः

अण्ड+ज =अण्डात् जातः

स्वेदा + जा = स्वेदजः

उद्भिज+जा =

रिपिंग आउट

इन्द्र + गोप =

इन्द्रगोपः कीटः रक्तः शुक्लः वा वृष्ट्या पोषितः ।

**उपसंहारः**

एवं च महाकाव्येषु भावगीतेषु, दिग्विजयादि सन्दर्भेषु मृगयादि विलासक्रियादिषु, विपिनशिलोच्चयादीनां निसर्गघटकानां वर्णनेषु, ग्रामीण-नागरिक-जीवन-सरणि-निरूपणेषु, प्राणिनां स्वभाव-विज्ञानं यथेच्छमेव लब्धुं शक्नुमः। चम्पूमहाकाव्येषु गद्यकाव्येषु च अधिकतरमेवोपवर्ण्यन्ते इमे सन्दर्भाः । मानसोल्लासे तावत् तत् तत् प्राणि-विज्ञान समन्विताः शास्त्रीयग्रन्थाः एव साररूपेणावतारिताः सन्तीति तु संशयच्छेदि वचः।

**आकरः**


1. Pride of India ( A glimpse of India's scientific Heritage). Samskrit Bharati New Delhi 2006
2. लेखमञ्जरी - Dr.VeneemadhavaShastri B.Joshi. Roopa Publication 2018
3. सुशृतसंहिता सूत्रस्थान अध्यय-१ श्लोक ३०
4. पदार्थ विज्ञान एवं आयुर्वेद इतिहास (Philosophy & History of Ayurveda) डा. दीपक यादव 'प्रेमचन्द्र' - चौखम्बा सुरभारती प्रकाशन वाराणसी २०१४



National Journal of
Hindi & Sanskrit Research

ISSN: 2454-9177
NJHSR 2024; 1(52): 71-74

www.sanskritarticle.com

**राहुल:**
शोधच्छात्र:, फलितज्योतिषविभाग:,
श्री.ला.ब.शा.रा.सं.विश्वविद्यालय:,
नवदेहली- ११००१६

**Correspondence:**
**राहुल:**
शोधच्छात्र:, फलितज्योतिषविभाग:,
श्री.ला.ब.शा.रा.सं.विश्वविद्यालय:,
नवदेहली- ११००१६

# ।।स्त्रीपुरुषयोप्रजननस्वास्थयविचार:।।

**राहुल:**

**गर्भस्याधानं वीर्यस्थापनं स्थिरीकरणम्।**
**यस्मिन्येन वा कर्मणा तद् रग्भाधानम्।।**

अशयोऽयं यत् गर्भबीजमाधानञ्च सतेजस्य दीर्घायुसन्ततेः प्राप्यते यथाविधिं यथासमयं च संस्थापनीयम्।

**निषेकात् वैजिक चैनो गर्मिकं चापमृज्यते।**
**होत्रसंस्कारसिध्दिश्च गर्भाधानं फलं स्मृतम्।।**[1]

विधिपूर्वकेन संस्कारयुक्तेन गर्भाधानेन साधु-सुयोग्यसंन्ततेः उत्पत्तिः संजायते। संस्कारेणानेन वीर्यसम्बन्धिनो क्षेत्रसंस्कारश्च जायते। इदमेव गर्भाधानसंस्कारस्य फलम्।

गर्भाधान दिने सर्वादौ प्रातःकाले भगवतः गणेशस्य विधिपूर्वकं पूजनं नान्दीश्राध्दादिकश्चकरणीयं भवति। स्वीयकुलदेवतायाश्च पूर्वजाणाञ्च आशीर्वादोऽपि स्वीकर्तव्यः भवति। गर्भाधानसमये गर्भाधानात्प्राक सकल्पः प्रार्थना च विधेयः। तथा च श्रेष्ठात्मनः आवाहनं भावदशा वातावरणञ्च यावच्छुद्धं भविष्यति श्रेष्ठगर्भप्रवेशस्य सम्भावना तावती एवं भविष्यति । गर्भाधानं सदा सूर्यास्त पूर्वमेव विधातव्यम्। गर्भाधानं दक्षिणाभिमुखो भूत्वो न करणीयः गर्भाधानकक्षस्य परिवेशः पूर्णरुपेण परिशुद्धैव भवेयु:। गर्भाधानकाले उभयोः दम्पतेः आचारः- विचारः च पूर्णतया विशुद्धः भवेयु**:** ।

**आयुर्वेददिशा गर्भोत्पत्तिकारणम्-**

चरकसहितानुसारं यदा स्त्रियः पूर्वतनोरजः निसृतः । ततः परं नूतनस्य रजस्यस्थापनं जायते । सा स्त्री स्वात्मानं संशोध्य स्नानादिकं विदधाति। तस्य योनौ रजे गर्भाशये च कोऽपि दोषः अवशिष्टः न भवति तदा सा ऋतुमतीति पदेनभिधीयते। एवम्भूतया स्त्रिया यदि कोऽपि निर्दुष्टशुक्राणुयुक्तः पुरुषः सम्भोगः विदधाति चेत् तदा वीर्यरजजीवानां त्रयाणामपि संयोगेन समुचितः गर्भः समुपजायते। अयं जीवः गर्भाशये प्रविश्य वीर्यरजयोः संयोगेन स्वात्मानं गर्भरुपेणोत्पाद्यते । ज्योतिषशास्त्रे जीवं (गुरुं ) गर्भोत्पतिकारकं मन्यन्ते।

**पुरुषेषु स्तम्भनदोषः–**

स्तम्भनदोषः एका स्थितिः वर्तते। यस्यां पुरुषः यौनसम्बन्धस्थापनाय जननेद्रियेज्पेक्षित सुदृढवा सम्पादने असमर्थाः भवन्ति। इयमेका सामान्यभूता समस्या वर्तते। या हि पुरुषेषु कस्मिश्चिदपि वयसि भवितुमर्हति। परं समस्यामिदं सामान्येन चत्वारिंशादधिकेषु (40) आयुषु पुरुषेषु दृश्यते।

स्तम्भनदोषस्य नैकानि कारणानि भवितुमर्हन्ति यो अन्तर्भूतानि भवन्ति। शारीरिकसमस्याः हृदयरोगः मधुमेहः उच्चरक्तचापः स्ट्रोक, तन्त्रिकासम्बन्धिविकाराः इत्यादयाः समेऽपि स्तम्भनदोषे कारणीभूताः भवन्ति।

**औषधय:-**एंटाहाइपरटेन्सिव सम्बन्धि औषधायाः, एंटीडिप्रेसेंट एवञ्च प्रोस्टेट कैसर इत्यस्य सम्बन्धिनः औषधयः स्तम्भनदोषस्य कारणीभूताः भवन्ति।

जीवनशैलीसम्बन्धिकारकणानि- धूम्रपानं, मद्यपानं तथा स्थूलता च स्तम्भनस्य जीवनसम्बन्धितानि कारणानि सन्ति। मानसिकस्वास्थ्यसमस्याः- चिन्ता, अवसादः तनावः रिक्ततादि स्तम्भनस्य मानसिक स्वास्थ्यसम्बन्धितानि कारणानि सन्ति।

**स्तम्भनदोषस्य निवारणाय चिकित्सासम्बन्धिताः समुपलब्धाः विकल्पा: येषु च-**

• **औषधयः-** फॉस्फोडाईस्टेरेज-5(PDE-5) अवरोधकः एकः औषधिः वर्तते यत्स्चम्भन दोषनिवारणे साहाय्यं यच्छति। एतेषु सिल्डेनाफिल (वियाग्रा),ताडालफिल (सिल्डेनाफिलसिट्रेट) तथा वॉर्डनाफिलं (सेविट्रा) आदि – परिगणिताः सन्ति। इमानि औषधानि लिङ्गे रक्तप्रवाहं वर्धयन्ति।

• **इंजेक्शन-**पेनाइल इंजेक्शन स्तम्भनदोषनिवारणस्य एकः समुचितः विकल्पः वर्तते। एतेषु- अलप्रोसटाडिल (कैवरजेक्ट ईडेक्ससमयूएसई) भवति पुल्लिङ्ग रक्तप्रवाहं वर्धयति।

• **वेक्यूम पंप-** वेक्यूमपंप इदमपि स्तम्भनदोषस्य, निवारेकत्वेन एकः विकल्पः वर्तते। इदमेकमुपकरणं येन लिङ्गे वापुमकर्षति तदा काचित् कठिनता जन्यते।

• शल्यचिकित्सा इत्यादि अन्यः उपायः उपचारो वा प्रायः निष्फलाः भवन्ति। अतः स्तम्भनदोषाय सर्जरी (शल्य) एकः विकल्पः प्रोस्थेसिस इत्यादिकं लिङ्गे प्रत्यारोप्यते।

**पुरुषेषु गर्भधारणा क्षमतायाः प्रमुखानि कारणानि इमानि सन्ति-**

पुरुषेषु शुक्राणुसंख्यायाः न्यूनत्वे सन्ति तदा गर्भधारण समस्या भवितुर्महति। विश्वस्वास्थ्यसंगठनानुसारं **(WHO)** एकस्य स्वस्थ पुरुषस्य वीर्ये प्रतिमिलीलीटर संख्या न्यूनातिन्यूना 15 मिलियन शुक्राणुः स्यादेव । यदि कस्यचित्पुरुषस्य वीर्ये प्रतिमिलीटर शुक्राणूनां संख्या 15 मिलियन इत्यवः न्यूनं वर्तते चेत् तमल्पशुक्राणुसंख्या (ओलिगोस्पर्मिया) इति रुपेण ज्ञायते।

**अल्पशुक्राणुसंख्यायाः नैकानि कारणानि भवितुमर्हति येस्विमानि परिगणितानि-**

• जन्मजातसमस्याः- केषुचित पुरुषेषु जन्मतः एव शुक्राणु उत्पादने समस्या भवति।

• पर्यावरणीयकारकाः- केचन् पर्यावरणीयाः कारकाः भवन्ति । यथा धूम्रपानं, मद्यसेवनं केषाञ्चित् औषाधीनां सेवनं शुक्राणूत्पादनक्षमतां प्रभावितुं शक्यते ।

• चिकित्सीय स्थितयः- काचन् चिकित्सकीयाः स्थितयः अपि भवन्ति। यथा कि टेस्टिकल कैसर एण्ड्रोजेन इत्यस्य न्यूनता, सङ्कमणम् , इत्यादि शुक्राणूत्पादन शक्तिं प्रभावयन्ति। न्यूनशुक्राणुसंख्यायाः सत्वात् गर्भधारणे समस्या आगच्छति परं समस्येयं सर्वदा गर्भावरोधस्य कारणं न भवति। नैके पुरुषाः तथाभूताः सन्ति येषु शुक्राणूनां संख्या न्यून्यत्वेऽपि गर्भधारणं कर्तुं शक्नुवन्ति। न्यूनशुक्राणुसंख्यायै अनेके उपचाराः उपचाराय विकल्पाः च समुपलब्धाः सन्ति। तेषु इमेऽन्तर्भूताः सन्ति। जीवनशैल्यां परिवर्तनम्धूम्रपानत्यागः मदिरायाः त्यागः, स्वस्थाहारः इत्यादिकं शुक्राणूनामुत्पादने उत्तमम् वा ब्ह्त्तरं वार्तुं शक्यते।

**आईवीएफः-** आईवीएफ(इन विट्रोफर्टिलाईजेशन) एका तकनीकी वर्तते। यस्यां शुक्राणून् अण्डान् च बहिर्निष्कास्य निषेचनं क्रियते। आईवीएफ इत्यस्य उपयोगं कृत्वा चिकित्सकः शुक्राणूनां संख्यायाः ध्यात्वा स्त्रीं गर्भवती कर्तं शक्यते।

यदि भवन्तः न्यूनशुक्राणूनां संख्यायाः चिन्ताऽस्ति चेत् स्वकीयं चिकित्सकं परामृशेयुः। चिकित्सकेः शुक्राणूनां संख्यायाः गुणवत्तायाः च परीक्षणं कर्तुं शक्यते। तथा च ते उत्कृष्टोपचाराय विकल्पचयने सहायतां यच्छन्ति। पुनरत्र केचन् सुझावाः प्रदत्ताः, सन्ति। ये हि पुरुषं स्वशुक्राणुस्वास्थ्यमुत्कष्टतरं नेतुं सहायतां कुर्वन्ति।

• **स्वस्थाहारसेवनम् –** एकः स्वस्थाहारः यस्मिन् विटामिन- खनिज, एवं च एंटी ऑक्सिडेण्ट इति स्यात् । इमे शुक्राणूत्पादने वृद्धिं कुर्वन्ति।

• **नियमेन व्यायामः कुर्यात्-** नियमितव्यायामः टेस्टोस्टेरोन इत्यस्य स्तरं वर्धयतुं साहाय्यं करोति। व्यायामोऽयं शुक्राणूत्पादनाय मत्यावश्यकः।

• **पर्याप्तनिद्रा स्यात्-** पर्याप्तनिद्रा शुक्राणूत्पादने विकासे च अत्यन्तावश्यकः।

• **धूम्रपानेन मद्यपानेन च परिहारः**-धूम्रपानं मद्यपानञ्च शुक्राणूनामुत्पादने हांस क्षतिं जनयति प्राप्तुं शक्यते।

• **मनोद्विघ्नता -**मनोद्विघ्नता शुक्राणूनामुत्पादने विशिष्टं प्रभावं जनयति। उपर्युक्तबिन्दुनामनुपालनेन पुरुषाणाङ्कते शुक्राणुस्वास्थय-सुदृढीकरणाय गर्भधारणसम्भावनावर्धयितुं सहाय्यं भवति।

• शुक्राणूनां संख्यायां न्यूनता अथ च शुक्राणूनां गतिशीलतायाञ्च न्यूनतेति।

• शुक्राणुषु आकारः आकारेषु च असमान्यता भावः।

• शुक्राणुषु गुणसूत्रसम्बन्धिसमस्यायाः उत्पत्तिः।

• पुरुषेषु हार्मोन(रासायनिक) असन्तुलनम् ।

• पुरुषेषु संक्रमणेनघातेन च शुक्राणत्पादने न्यूनभावः।

स्तम्भनदोषाय कृते उपचारस्य सर्वोत्तमोपायः प्रक्रमः वैयक्तिकपरिस्थितिषु प्राथमिकतासु च आश्रितः भवति । यदि केषुचित् पुरुषेषु स्तम्भनदोषस्य समस्या अस्ति चेत् स्वकीयेन चिकित्सकेन साकं वार्ता विधेया । येन उपचाराय समुचितमार्गदर्शनं प्राप्तुं शक्यते।

स्तम्भनदोषाय केचन् गृहजनिताः उपचाराः अपि सन्ति। तत्र प्रयासः कर्तुं शक्यते । तेषु चैमे परिगहिताः।

• **स्वस्थ्याहारसेवनम्-** स्वस्थ्याहारसेवनेन हार्दस्वास्थे सकारात्मक-परिवर्तनं जायते। योहि स्तम्भन दोषस्य भयमपि न्यूनीकरोति।

• **नियमेनव्यायामः-**नियमेन व्यायामकरणेन हृदयस्वास्थ्ये परिवर्तन जायते । तथा च स्तम्भनदोषस्य न्यूनीकरणेऽपि साहाय्यं प्राप्यते।

• **मनोद्विघ्नातायां न्यूनत्वम्-** मनोद्विघ्नता एकं स्तम्भनदोषस्य सामान्यं कारणं वर्तते। मनोद्विघ्नातायां (तनाव) न्यूनीकरणार्थं गोगध्यानदिकाः नैकाः तकनीकयः सन्ति यत्र प्रयासो विधेयः।

• **धूम्रपानमद्यपानयोः त्यागः-** धूम्रपानेन मध्यपानेन च स्तम्भन दोषस्य भयं वर्धते।

**पुरुषेषु नपुसकतायाः कानिचन् विशिष्टानि कारणानि अन्तर्भूतानि भवन्ति-**

• **शुक्राणुषु न्यूनताः-** एकस्य स्वस्थपुरुषस्य वीर्ये प्रतिमिलीटर न्यूनातिन्यून 15 मिलियन संख्याकपरिमिताः शुक्राणवः भवेयुः यदि कश्याचिद् पुरुषस्य वीर्ये प्रतिमीलिलीटर शुक्राणूनां संख्या 15 मिलियन् इत्यनेन न्यूनाऽस्ति चेत् तस्य न्यूनसंख्याविशिष्टस्य शुक्राणोः ओलिगोस्पर्मिया इत्यदि पदैरभिधीयते।

• **अस्वस्थशुक्राणुः-**शुक्राणूनां निषेचनेन अर्हतामवासुं तान् शुक्राणून स्वस्थः सक्रियश्च कर्तव्यम्। यदि शुक्राणुषु कापिसामस्या अस्ति अस्यां स्थितौ इमे शुक्राणवः निषेचने अक्षमाः भवन्ति ।

• **शुक्रजननमार्गेऽवरोधः-** शुक्राणवः अण्डकोषात् बहिरागत्य स्त्रियः शरीरे प्रवेशाय शुक्रजनकमार्गेण गच्छन्ति । अत्र शुक्रजननमार्गे कोप्यवरोधः भवति चेत् शुक्राणवः अण्डकोषात् बहिः आगन्तुं न शक्नुवन्तिं। येन गर्भधारणं अपि नैव भविष्यति।

यदि भवन्तः ग्रहस्थप्रायोन् आचारन्ति । परं तत्रं काचित् अभीष्ट प्रतिपुष्टिः नागच्छति चेत् स्वकीयेन चिकित्सकेन परामर्शो विधेयः।

➢ **ज्योतिषानुसारं स्तम्भनदोषः-**

ज्योतिषशास्त्रानुगुणं शुक्रग्रहः पुरुषाणां यौनजीवनस्य प्रतिनिधित्वं विदधति। शुक्र ग्रहस्य न्यूनता अशुभस्थितिर्वा स्तम्भनदोषस्य कारणं भवति। अत्र शुक्रग्रहस्य अशुभस्थितेः कानिचन् लक्षणानि निम्नलिखितानि सन्ति ।

• शुक्रग्रहः जन्मकुण्डल्याम् अशुभस्थाने भाने वा स्थितः स्यात् ।
• शुक्रग्रहः पीडितः निम्नगः च स्यात् ।
• शुक्रग्रहे शनिराहोः केतोः वा प्रभावः स्यात्।
• शुक्रग्रहे कोऽपि अशुभयोगः न निर्मीयात्।

एतासु स्थितिषु पुरुषं स्तम्भनदोषस्य समस्या भवितुमर्हति। एतान् विहाय ज्योतिषशास्त्रानुसारं मंगलग्रहस्य न्यूनता अपि स्तम्भनदोषस्य कारणेस्वज्यतमा भवति।

ज्योतिषशास्त्रानुसारं स्तम्भनदोषोपचाराय शुक्रमङ्गलग्रहयोः सौहार्द अत्यन्तावश्यकं भवति। अस्य कृते ज्योतिषज्ञाः अनेकाः उपायाः उपदिशन्ति। यथा – मन्त्रजपः,यन्त्रधारणं , हवनादयः।

❖ **केचन सामान्योपायाः निम्नलिखिताः सन्ति-**

• शुक्रग्रहस्य कृते श्वेतवस्तूनामुपयोगःकर्तव्यः। यथाहि श्वेतवस्त्रधारणं, श्वेतपुष्पं , श्वेतश्वाद्यम् इत्यादि।
• शुक्रग्रहस्य कृते शुभरत्नानि यथा- मौक्तिकं, वज्रमपिः मरकतमणिः (पन्ना) इत्यादयाः।
• शुक्रग्रहाय शुक्रस्य मन्त्र जपं जपेयुः ।
• शुक्रग्रहस्य कृते शुभ यन्त्रधारणम्।

एभिरुपायै शुक्रमङ्गलौ गृहौ सुदृढतां कर्तु शक्यते। येन स्तम्भनदोषे परिहारः जायते।

➢ **स्त्रीषु गर्भधारणाक्षमतायाः प्रमुखानि कारणानि-**

स्त्रीषु गर्भधारणसमस्यायाः खलु अनेकानि कारणानि भवितुर्महन्ति । येषु कानिचन् सामान्यभूतानि कारणानि निम्नलिखितानि सन्ति । तानि च-

• **ओव्युलेशन इत्यस्य समस्या-** ओणयुलेशन इतीयं सा प्रक्रिया वर्तते यया अण्डाशयः एकअण्डं विसृजति। यदि कापि स्त्री नियमेन ओव्युलेशन् इतीयं प्रक्रिया न विद्धाति चेत् सा गर्भधारणं कर्तुं न शक्नोति। ओव्युलेशन समस्यासु कारणत्वेन अन्तर्भूतततत्वेषु सन्ति । पीयुष (हार्मोन) ग्रन्थीनां विषमता, पॉलीसिस्टक ओवरी सिंड्राम(पी.सीओएस ) तथा -थायराइड इत्यादयः परिगणिताः सन्ति।

• **फैलोपियन ट्यूब इत्यस्य समस्या-** फैलोपियन ट्यूब अण्डं गर्भाशयं प्रति नयति। यदि फैलोपियन ट्यूब इत्यस्य अवरोधः सङ्क्रमणम् इत्यादि अस्ति चेत् अण्ड गर्भाशयं यावन्तं व्रजति । फैलोपियेन ट्यूब इत्यस्य समस्याकारणेषु सङ्क्रमणं शल्याकार्यं (सर्जरी ) एवञ्च जन्म जातविकारः इत्यादयः परिगणिताः सन्ति ।

• **गर्भाशयसमस्या-**गर्भाशयः तत्स्थानं वर्तते यत्र भ्रूणस्य विकासः जायते। यदि गर्भाशये काऽपि समस्या अस्ति चेत् भ्रूणविकासे किञ्चित् काठिन्यं भवितुर्महति गर्भाशयसमस्या कारणेषु एण्ट्रोमेट्रियोसिस, फाइब्राएड एवं गर्भाशयभित्तौ स्थूलता इत्यादि सन्ति।

• **शुक्राणुसमस्या-** पुरुषाणां शुक्राणुः अण्डं निषेचयति यदि शुक्राणूनां संख्या न्यूता वर्तते चेत् अण्डनिषेचनेऽक्षमोः भवन्ति शुक्राणुसमस्या-करणेषु हार्मोन इत्यस्य असन्तुलता संक्रमणं तथा जीवनशैलीकारकानि यथा- धूम्रपानं मद्यापानमित्यादि।

❖ **स्त्रीषु गर्भाधारणाऽक्षमतायाः संक्षिप्त कारणम्।**

• अण्डस्य अनिर्माणं तथा अण्डस्य अण्डाशयेन बहिः न आनयनम्।
• अण्डाशये फाइब्राइडे उत अन्य ट्यूमर इत्यादयः
• गर्भाशये पौलीप्स उत अन्य ट्यूमर इत्यादयः।
• ट्यूब इत्येतेषु अवरोधः जायते।
• एण्डोमेट्रिओसिस इति जायते।
• पीसीओडी इति।
• हार्मोनग्रन्थेरसन्तुलनम्।

एतान् विहायअन्योऽपि कारकाः सन्ति येहि स्त्रीषु गर्भाधारणा-ऽक्षमतायां कारणत्वेन सन्ति।

❖ **पञ्चतान सध्यान्त गर्भस्पष्ट दहिनः-**

• **आयुः-** महिलासु प्रजननक्षमता आयुषः कारणादपि न्यूनायते । पञ्चत्रिशतं (35) आयुषः परं स्त्रियः गर्भधारणे काठिन्येम् अनुभवन्ति।

• **भारः-** न्यूनाधिक्ये भारेऽपि गर्भधारणसम्भावन् न्यूनायते।

• **मादकसेवनम्-** धूम्रपानेन मद्यपानेन चापि गर्भधारणसम्भावनायां न्यूनत्वं भवितु शक्यते।

• **चिन्ता मनोद्विष्नता च –** चिन्तया तनावेन च महिलासु गर्भधारणक्षमतायां न्यूनता जायते। यदि गर्भधारणक्षमतायां न्यूनत्वात् गर्भधारणे किञ्चिदपि काठिन्यमनुभूयते चेत् स्वीयेन चिकित्सकेन परामर्शो विधेयः। चिकित्सकः भवता साकं सम्पर्कं विधाय समस्यायाः अन्वेषणं कर्तुं प्रभवति । काऽस्ति।

यत्र केचन् विन्दवः प्रदत्ताः सन्ति ये महिलासु गर्भधारणे साहय्यं कल्पयन्ति ।

• **नियमेन सम्भोगकरणम्-** गर्भधारणसम्भावना तदा अधिका जायते। यदा स्त्री स्वकीये गर्भधारणसम्भानाकाले (ओव्यूलेशन) इत्यत्र सम्भोगः विद्धाति। अस्य (ओव्यूलेशन) कालस्य निरीक्षणार्थ कस्यचित् उपकरणस्य (ओव्युलेशन टेस्ट किट) प्रयोगः कर्तुं शक्यते।

• **स्वस्थाहारः -**एकः समुचित् आहारः शरीरं गर्भधारणायं सज्जीकरोति । अहारे च फलानि, साकं , पूर्वअन्नादिकं स्त्री कर्तुव्यम्।

• **नियमेन व्यायामः-** नियमेनव्यायमकरणं भारासन्तुलनं नियन्त्रयति। तथा च शरीरं स्वस्थयति।

• **तनावराहित्यम्-** तनावः गर्भधारणसम्भावनां न्यूनीकरोति। योगध्यानाभ्यासादिभिः तनावमनोद्विध्नातादि न्यूनीकर्तुं प्रयासैः विधेयः।

**ज्योतिषशास्त्रानुसारं** स्त्रीषु **गर्भस्याधारणे कारणानि-**

वस्तुतः गर्भस्याधारणे नैकानि कारणानि विहितानि सन्ति । येषु कानिचन् निम्नलिखितानि

• **शुक्रग्रहस्यन्यूनता अशुभस्थितिश्च –** शुक्रग्रहः स्त्रीषु प्रजननक्षमतायाः प्रतिनिधित्व करोति। एतावता शुक्रग्रहस्य न्यूतना अशुभस्थितिश्च गर्भधारणे काठिन्य निर्माति।

• **मङ्लग्रहस्य न्यूनता अशुभस्थितिश्च-** मङ्लग्रहस्य निर्बलता अशुभस्यितिश्च गर्भ धारणं कठिनीकरोति। यतोहि मङ्लग्रहः स्त्रीणां यौनस्वास्थ्यं प्रभावयति।

• **बुधग्रहस्यनिर्बलता अशुभस्थितिश्च-** बुधग्रहः स्त्रीणां अण्डाशयं प्रजननतन्त्रञ्च प्रभावयति । बुधग्रहस्य निर्बलता अशुभस्थितिश्च गर्भधारणे बाधां जनयति।

• **चन्द्रग्रहस्य दुर्बलता अशुभस्थितिश्च-** चन्द्रग्रहः स्त्रीणां मनोभावात्मकस्वास्थ्यं प्रभावयति। चन्द्रग्रहस्य दुर्बलता अशुभस्थिति वा गर्भधारणे बाधामुत्पादयति।

• **राहुकेतुग्रहोप्रभावः-**उभावपि ग्रहौ अद्भुतां निरुपयतः इति अस्ति मन्तव्यं सर्वेषाम्। अनयोः ग्रहयोः साक्षात् प्रभावः गर्भधारणबाधायाम् उत गर्भोत्पन्ने जायमानायां बाधाया दरीदृश्यते।

ज्योतिषशास्त्रानुसारं अगर्भाधारणसमस्यां दूरीकर्तुं शुक्रमङ्ल-बुधचन्द्र ग्रहाणां सुदृढता सम्पादनं नितरामावश्यकं वर्तते। एतदर्थं ज्योतिषज्ञाः विभिन्नाः उपायाः निर्दिसन्ति। यथा – मन्त्रजपं, यन्त्रधारणं, हवनं दानं, चेत्पीदयः। अत्र केचन् सामान्योपायाः निर्दिष्य सन्ति ।

• शुक्रग्रहस्य कृते श्वेतवस्तूनां प्रयोगः कर्तव्यम्। यथा- श्वेतवस्त्रं, श्वेतपुष्पं, श्वेतमिष्ठान्नमित्यादयः ।

• शुक्रग्रहस्य कृते शुभरत्नानि यथा- मौक्तिकं- कुलिश- मरकत ।

• शुक्रग्रहस्य कृते शुक्रमन्त्राणां जपम्।

• शुक्रग्रहाय शुभयन्त्रधारणम्।

एभिरुपायैः शुक्रमंगल बुधचन्द्रग्रहाणां सुदृढतां सम्पादयितुं शक्यते। येन गर्भधारणस्य सम्भावना वर्धते।

वस्तुतः ध्यातव्यमस्ति ज्योतिषशास्त्रमेकं सहायकविज्ञानं वर्तते। अत्र गर्भधारणसमस्यायां चिकित्सकीय परामर्श विधातव्यः।

**सन्दर्भग्रन्थः-**

[1] स्मृति संग्रह



National Journal of Hindi & Sanskrit Research

ISSN: 2454-9177
NJHSR 2024; 1(52): 75-77

www.sanskritarticle.com

**गौरव जोशी**
शोधच्छात्रः, शिक्षा शास्त्र विभाग,
श्री.ला.ब.शा.रा.सं.विश्वविद्यालयः,
नई दिल्ली

**शोध-निर्देशक**
**प्रो. रचना वर्मा मोहन**
आचार्या शिक्षाशास्त्र विभाग,
श्री.ला.ब.शा.रा.सं.विश्वविद्यालयः,
नई दिल्ली

**Correspondence:**
**गौरव जोशी**
शोधच्छात्रः, शिक्षा शास्त्र विभाग,
श्री.ला.ब.शा.रा.सं.विश्वविद्यालयः,
नई दिल्ली

# योगः मानसिकस्वास्थ्यञ्च

**गौरव जोशी, प्रो. रचना वर्मा मोहन**

मानवजीवनस्य चतुर्णां लक्ष्याणां (धर्मार्थकाममोक्षाः) प्राप्त्यर्थं स्वस्थशरीरस्य आवश्यकता भवति, अतः उक्तं भवति – "शरीरमाद्यं खलु धर्मसाधनम्" इति। सम्प्रति मानवजीवने नैकाः प्रकाराः तनावाः सन्ति। तेभ्यः उत्पद्यमानाः बहवः दुःखः, पीडाः, रोगाः च सन्ति। एतेषां निवृत्तेः उपायान् अन्वेष्य सामान्यजनस्य मनसि योगविषये जिज्ञासा उत्पद्यते। परन्तु योगविषये भिन्नाः प्रत्ययाः (प्रायः दुर्भावनाः) सन्ति। केचन जनाः गृहकार्यतः सर्वथा विरक्तः सन् त्यागजीवनं जीवितुं एकान्तवासं च योगस्य अभ्यासः इति मन्यन्ते, केचन जनाः यथासम्भवं दीर्घकालं यावत् एकस्मिन् स्थाने निश्चलः भवितुं योगस्य अभ्यासः इति मन्यन्ते केचिद् केवलं व्यायामरूपं मन्यन्ते अन्ये तु रोगचिकित्सां मन्यन्ते। न केवलं सम्पूर्णं शास्त्रं, अपितु व्यक्तेः समाजस्य च पारस्परिकसम्बन्धानां आरोग्यदर्शनम् अस्ति। योगाभ्यासात् पूर्वं अस्माभिः स्पष्टतया ज्ञातव्यं यत् योगस्य किम् अभिप्रायः।

**योगः**

'योग' शब्दः 'युज समाधौ' इति संस्कृतमूलात् निष्पन्नः। बध्नाति, सङ्ग्रहः, संयोजितः, एकीकृतः वा इत्यर्थः। आत्मनः परमात्मनः च संयोगेन कथं मोक्षः प्राप्तुं शक्यते इति योगदर्शने व्याख्यातं भवति।

अतृप्ता ज्ञानतृष्णा मनुष्यस्य विशेषता वर्तते। परितः अनन्तं अद्भुतं च सृष्टिं दृष्ट्वा मनुष्यस्य मनसि तस्य विषये स्वाभाविकं जिज्ञासा उत्पन्ना। अस्याः असीमस्य अनन्तस्य च सृष्टेः ज्ञानं प्राप्तुं विशेषविचाराः, उपासनाविधयः च उद्भूताः। तस्मात् यत् विज्ञानं उद्भूतं तत् दर्शनम्। दर्शनं एतावत् विस्तृतं यत् मनुष्यस्य बुद्धेः तस्य प्रयत्नस्य च परम् अस्ति। अस्मिन् पृथिव्यां ऋषिरूपेण अवतरितस्य दृश्येश्वरस्य मनुष्याणां कृते दानम् अस्ति। परमसुखं प्राप्तुं सर्वोत्तमः मार्गः दर्शनम् एव उपलभ्यते। न्यायदर्शनं, वैशेषिकदर्शनं, सांख्यदर्शनं, योगदर्शनं, मीमांसादर्शनं (पूर्वमीमांसा) एवं वेदान्तदर्शनं (उत्तरमीमांसा), एतानि षट् वैदिकदर्शनानि भारतीयदर्शनस्य मूलदर्शनानि सन्ति। एतेषु योगदर्शनं निहितम् अस्ति। ईश्वरप्राप्त्यर्थं भिन्नमार्गान् सम्यक् न अनुसरति चेत् तस्य जीवने बहवः विघ्नाः, निराशाः, असफलताः च उत्पद्यन्ते। अष्टाङ्गयोगे तु एतादृशं किमपि न भवति। योगसाधकः ईश्वरसाक्षात्कारं प्राप्तुं न शक्नोति चेदपि न्यूनातिन्यूनं शारीरिकं मानसिकं च स्वास्थ्यं प्राप्नोति।

मनुष्येषु ज्ञानस्य इच्छा अपारम् अस्ति। ज्ञानवृक्षः तस्य बुद्धौ अङ्कुरितं, तस्य मूले मनुष्यस्य मनः निहितम् अस्ति। ज्ञानप्राप्त्यर्थं सन्तुलितचित्तस्थितिः अतीव महत्त्वपूर्णा भवति। परन्तु सुख-दुःख-श्रद्धा-संशय-प्रेम-द्वेषादिषु उत्पन्नदुविधाभ्यां मनः विचलितं भवति, मानसिकसन्तुलनं विक्षिप्तं भवति, बुद्धिः च ग्रहणं भवति, ततः मनुष्यः ज्ञानात् वंचितः एव तिष्ठति। मनः सन्तुलितं संस्कृतं च बुद्धेः ग्रहणं निवारयितुं च उद्देश्यं कृत्वा 'योगशास्त्रम्' निर्मितम्। ज्ञानाभ्यासे स्वीकृता उपासनासंस्कारविधिः योगः। एषा आध्यात्मिकतायां आरम्भात् अन्ते यावत् सम्पूर्णा साधनव्यवस्था अस्ति। योगदर्शनं सर्वेषां दर्शनानां

मुकुटम् अस्ति। न्यायं वैशेषिकदर्शनं च दुःखनिवृत्त्यर्थं अष्टाङ्गयोगस्य समर्थनं करोति स्म। वेदान्तेन ब्रह्मतत्त्वस्य परोक्षसाक्षात्काराय अष्टाङ्गयोगस्य मार्गः वर्णितः अस्ति। सांख्यदर्शनम् अपि योगेन सह सङ्गतम् अस्ति। एवं प्रकारेण योगदर्शनं दर्शनस्य सर्वशाखानां उपशाखानां च पूर्णव्यञ्जनम्, तस्य परिष्कृतरूपम् अस्ति। सर्वथा सर्वगतं स्वयम् समाहितं सम्पूर्णं विश्वशास्त्रम् अस्ति ।

यथा मनुष्यः अन्न-वस्त्र-आश्रय-आदीनां आवश्यकतानां पूर्तये निरन्तरं प्रयतते, तथैव मनसः शान्तिं, सन्तोषं च निरन्तरं प्रयतते। तदर्थं सः "योगशास्त्रस्य" आवश्यकताम् अनुभवति। योगाभ्यासात् मनुष्यस्य मनः, बुद्धिः, अहङ्कारः च नियन्त्रितः, नियमितः च भवति। कामपरिग्रहाद्विमुच्य आत्मनि लीनः उच्चतरां स्थितिं प्राप्नोति। योगी कृतज्ञतां अनुभवति। बुद्ध्या दुर्गमं इन्द्रियाणाम् परं च सुखम् अनुभवति। अस्मात् सुखात् उच्चतरं किमपि नास्ति। शोकपर्वतानां पतने अपि स्थिरः तिष्ठति। एवं यातनाबन्धनविमोचनं मुक्तिप्राप्तिः योगस्य वास्तविकं उद्देश्यम्। योगः मनसः चञ्चलप्रवृत्तीनां नियन्त्रणं कृत्वा तस्य स्थिरीकरणस्य, तस्य सर्वाशक्तिः सृजनात्मककार्ये उपयोगस्य च विधिः अस्ति। मनसि नियन्त्रणं प्राप्तुं न सुकरं स्यात्, किन्तु असम्भवं न भवति, यथा "श्रीमद्भगवद्गीता" – "अभ्यासेन, त्यागेन च क्रमेण मनसः नियन्त्रणं सिद्ध्यति" इति। धैर्यवान् व्यक्तिः निरन्तरप्रयत्नेन एतत् सम्भवं कर्तुं शक्नोति ।

अस्मात् 'योगशास्त्रस्य' सामान्यविमर्शात् इदं गहनं शास्त्रं दृश्यते, यत् सामान्यजनस्य प्राप्यतायां परम् अस्ति। अस्य गहनतमस्य विषयस्य सिद्ध्यर्थं सामान्यजनस्य कृते यः मार्गः उपलभ्यते सः अष्टाङ्गयोगः एव । अष्टाङ्गयोगस्य अभ्यासेन मनुष्यः मनः शान्तिं तृप्तिं च प्राप्तुं शक्नोति। तदा तस्य जीवने तस्य लक्ष्यस्य असिद्धेः कारणेन असफलता न भवितुम् अर्हति। यथा सः स्वस्य आध्यात्मिक-अभ्यासस्य प्रगतिम् करोति तथा तस्मिन् सफलतां अनुभवितुम् आरभते। सीमितं चेदपि शारीरिकं मानसिकं च स्वास्थ्यं निश्चितरूपेण प्राप्नोति। अस्मिन् जाति-धर्म-वर्ग-देश-लिङ्गयोः बाधकः नास्ति। बालः, वृद्धः, स्त्री, पुरुषः, रोगी, स्वस्थः, अस्वस्थः, सर्वैः योगाभ्यासात् सुखं प्राप्यते। कस्यापि आर्थिक-सामाजिक-बौद्धिक-मानसिक-स्थितेः व्यक्तिः किञ्चित् सुखं प्राप्नोति। महर्षि पतञ्जलिः अस्मान् 'अष्टाङ्ग योग' मार्गेण उत्तममार्गं दर्शितवान् अस्ति।

**स्वास्थ्यं**

स्वास्थ्यं केवलं रोगः विकलाङ्गता वा न अपितु शारीरिक-मानसिक-सामाजिक-कल्याणस्य सम्पूर्णा अवस्था अस्ति। अतः स्वास्थ्यं जीवनस्य सः गुणः अस्ति यः व्यक्तिं अधिकं सुखेन जीवितुं, उत्तमरीत्या सेवां कर्तुं च समर्थयति। यस्य देशस्य युवानः शारीरिकरूपेण, मानसिकरूपेण, नैतिकरूपेण च स्वस्थाः सन्ति सः देशः सदैव प्रगतेः मार्गे अग्रे गमिष्यति। स्वास्थ्यं न केवलं व्यक्तिगतजीवनाय अपितु राष्ट्रियजीवनाय अपि आवश्यकम्। तस्याभावे मनुष्यस्य जीवनं स्वस्य समाजस्य च भारः भवति।

**मानसिकस्वास्थ्यं**

मानसिकस्वास्थ्यं व्यक्तेः मनोवैज्ञानिकं, भावनात्मकं, सामाजिकं च कल्याणं निर्दिशति, यत् तस्य भावः, कथं चिन्तनं, व्यवहारं च प्रभावितं करोति। संज्ञानात्मकव्यवहारकल्याणस्य स्थितिः मानसिक-स्वास्थ्यं कथ्यते। 'मानसिकस्वास्थ्यं' इति पदं मानसिकरोगाभावं निर्दिश्य अपि प्रयुज्यते। मानसिकस्वास्थ्यस्य अर्थः मनः स्वस्थं स्थापयितुं भवति। मानवजातिः प्रायः स्वस्य भौतिकशरीरं स्वस्थं स्थापयितुं अधिकं ध्यानं ददाति। जनाः स्वस्य मनसः स्थितिं उपेक्षन्ते। मनुष्यस्य अन्यपशूनां श्रेष्ठता तस्य श्रेष्ठचित्ते एव निहितम् अस्ति। मनुष्यः केवलं स्वस्य अत्यन्तं विकसितमस्तिष्कस्य कारणेन एव जीवनं नियन्त्रयितुं समर्थः अभवत्। अतः मनुष्याणां कृते स्वशरीरं मनः च सुस्थं स्वस्थं च स्थापयितुं अतीव महत्त्वपूर्णं भवति। उत्तमप्रदर्शनाय, परिणामाय च शारीरिकं मानसिकं च स्वास्थ्यं समानरूपेण महत्त्वपूर्णम् अस्ति।

यथा वयं शारीरिकरूपेण व्याधिग्रस्ताः भवेम तथा वयं मानसिकरोगिणः अपि भवितुं शक्नुमः। मानसिकरोगः कस्यचित् स्वास्थ्यस्य अस्थिरता, यत्र भावनायां, चिन्तने, व्यवहारे च परिवर्तनं भवति। मानसिकरोगः तनावेन वा कस्यापि घटनायाः प्रतिक्रियायाः कारणेन वा भवितुम् अर्हति। आनुवंशिककारकाणां, जैवरासायनिक असन्तुलनस्य, बालदुर्व्यवहारः वा आघातः, सामाजिकहानिः, दुर्बल-शारीरिकस्वास्थ्यस्थितिः इत्यादिना अपि उत्पद्यते। मानसिक-स्वास्थ्यसमस्यानां अन्ये बहवः लक्षणानि सन्ति ये व्यक्तितः भिन्नाः भवन्ति तथा च भिन्नप्रकारस्य समस्यानां मध्ये अपि भिन्नाः भवन्ति। यथा - आतङ्कप्रकोपः, पुनरावृत्तिविचाराः च सामान्याः दुष्प्रभावाः सन्ति। अस्य मानसिकतनावस्य फलस्वरूपं वक्षः स्थलवेदना, श्वसनस्य कष्टं च अनुभवितुं शक्नोति। मानसिक-स्वास्थ्यस्य दुर्बलस्य अन्यत् लक्षणं ध्यानस्य अभावः अस्ति। एतत् तदा भवति यदा भवतः जीवने एकदा एव अतिशयेन प्रचलति तथा च भवन्तः अविचारितरूपेण त्रुटयः कर्तुं आरभन्ते, यस्य परिणामेण प्रभावीरूपेण एकाग्रतायाः क्षमता न्यूनीभवति अन्यः तत्त्वः सर्वदा संकटे एव भवति।

**योगः मानसिकस्वास्थ्यञ्च**

योगः सम्पूर्णशरीरे विश्रामं ददाति। अस्मिन् श्वसनस्य मन्दीकरणं (श्वसनं शान्तं गभीरं च भवति) मस्तिष्कस्य शान्तीकरणं च भवति, येन ध्यानं एकाग्रता च वर्द्धते, एतेन शरीरिकोन्नति, सद्भावः वर्द्धते, बुद्धि वर्द्धते च चेतनायाः उन्नतिः अपि भवति, तस्मात् स्वास्थ्यं प्रदातुं शक्नुवन्त्याः 'जीवनशक्तिः' प्रवाहः सुदृढः भवति। एतेन आत्मनिर्भरता आत्मविश्वासः च वर्धते तथा च वयं

स्वयमेव स्वस्य स्वास्थ्यस्य पालनं कर्तुं आरभामः। आहार-अभ्यासेषु प्रगति, अपव्ययस्य प्राकृतिक-भावानां सुविधा च योगस्य महत्त्वपूर्णाः भागाः अपि सन्ति। समग्रतया पश्यामश्चेत् योगः चिन्ता न्यूनीकर्तुं साहाय्यं करोति, कल्याणभावः च वर्धयति। एतेन पारस्परिकसम्बन्धेषु सुधारः भवति, एकाग्रता वर्द्धते, तृष्णायाः स्तरः न्यूनीकरोति, स्वास्थ्यरूपेण जीवनस्य प्रति आशावादी दृष्टिकोणः विकसितः भवति।

योगेन मधुमेहः, उच्चरक्तचापः, श्वसनरोगाः, चिन्ता, अवसादः, मनोविकारः इत्यादीनां केषाञ्चन मानसिकविकारानाम् लक्षणात् निवृत्तिः प्राप्यते इति दर्शितम् अस्ति योगाभ्यासेन अपि अवसादनिवारणे सहायकं भवति इति चिरकालात् दृश्यते। अनेन मनोदशा उत्तमा, व्यक्तेः क्रियाकलापयोः रुचिः अधिका भवति। एकाग्रतां/ध्यानं, स्मृतिशक्तिं, निद्रां, बुभुक्षां च वर्धयति। योगद्वारा चेतनायाः अवस्थायां प्रगतिः संज्ञानात्मक/व्यवहारपक्षेषु सुदृढं करोति इति दर्शितम् अस्ति।

**मानसिक-स्वास्थाय योगः क्रिया**

योगे मानसिकस्वास्थ्यस्य सुदृढीकरणाय नैकानि कार्याणि (योगः, प्राणायामः) सन्ति, येषां माध्यमेन मनुष्यस्य मानसिक-स्वास्थ्यस्य अपारं लाभः भवति। आसनप्राणायामद्वारा मानसिकस्वास्थ्यस्य निरन्तरलाभाः अवश्यमेव प्राप्यन्ते। योगस्य केचन मुख्यासनानि यथा-

**वीरभद्रासनम्**- एतत् आसनं मनः शान्तं कर्तुं सहायकं भवति।

**गरुडासनम्**- गरुड़ासनद्वारा एकाग्रतायां अपारं लाभं प्राप्तुं शक्यते ।

**नटराजासनम्**- नटराजासनस्य माध्यमेन मनुष्यः अवसादस्य चिन्तायां च नियन्त्रणं प्राप्नोति ।

**वज्रासनम्**- अनेन माध्यमेन मनुष्यस्य रक्तचापः नियन्त्रितः भवति, मनः शान्तं कर्तुं लाभप्रदं भवति ।

**निष्कर्षः**

मनः शरीरस्य एकं शक्तिशाली अङ्गं भवति, अन्येषां सर्वेषां अङ्गानाम् कार्याणि नियन्त्रयति। यदा अस्माकं मनः अस्थिरं भवति तदा ते अस्माकं शरीरस्य सम्पूर्णं कार्यं प्रभावयन्ति। शारीरिकरूपेण भावनात्मकरूपेण च सुस्थः भवितुं जीवनस्य सर्वेषु पक्षेषु सफलतायाः कुञ्जी अस्ति। मानसिकरोगस्य परिणामान्, शारीरिकस्वस्थतां यथा भवति तथा च जनाः अवगताः भवेयुः। तथैव मनः स्वस्थं स्थापयितुं अत्यन्तं ध्यानं दातव्यम्। मानसिकं शारीरिकं च स्वास्थ्यं परस्परं पृथक् कर्तुं न शक्यते। तथा च यदा उभयम् अपि सन्तुलितं भवति तदा एव वयं व्यक्तिं पूर्णतया स्वस्थं वक्तुं शक्नुमः। अतः सर्वेषां कृते महत्त्वपूर्णं यत् मानसिक-शारीरिक-कल्याणस्य सन्तुलनं प्राप्तुं कार्यं कुर्वन्तु, यदा तेषु कश्चन अपि स्तब्धः भवति तदा आवश्यकं समर्थनं प्राप्तुं च। प्राचीनकाले समग्रसामान्यस्वास्थ्यस्य आध्यात्मिकप्रगतेः च कृते योगस्य अभ्यासः भवति स्म। अद्यतनसंशोधनसाक्ष्यं सूचयति यत् योगस्य उपयोगः अतिरिक्तचिकित्सारूपेण अथवा केषुचित् सन्दर्भेषु मानसिकविकारस्य एकमात्रचिकित्सारूपेण कर्तुं शक्यते। एतेन न केवलं रोगस्य निदानं भवति अपितु व्यक्तेः समग्रपरिवर्तनं अपि कर्तुं शक्यते।

**सन्दर्भग्रन्थाः**


1. आयंगार बी. के. एस (2005) सभी के लिए योग, प्रभात प्रकाशन, नई दिल्ली.
2. आयंगार बी.के.एस. (2017) पतञ्जलियोगसूत्र, प्रभात पेपरबैक्स नई दिल्ली.
3. उत्तराखण्डमुक्तविश्वविद्यालयः (2012) योग के आधारभूत तत्व, हल्द्वानी प्रकाशन.
4. जवाहर लाल (2019) योग दर्शन के आधारभूत सिध्दांत, शिवालिक प्रकाशन, दिल्ली.
5. देवानंद स्वामी विष्णु (2009) योग संपूर्ण सचित्र पुस्तक, मोतीलाल बनारसीदास, दिल्ली.
6. पारेख प्रियांशी, जैन वैभव (2018) स्वास्थ्य शारीरिक शिक्षा एवं योग, शिवालिक प्रकाशन, दिल्ली.
7. भारद्वाज दिनेशचन्द्र (1976) स्वास्थ्य शिक्षा, विनोदपुस्तक मन्दिर, आगरा.
8. श्रीवास्तव ए.के, गौड एन.के. (2016) शारीरिकशिक्षा एवं स्वास्थ्य, प्रथमसंस्करण, बी आर. इन्टरनेशनल पब्लिशर्स दिल्ली.
9. शर्मा रमा (2020) शारीरिकशिक्षा, विनोदपुस्तक मन्दिर, आगरा.
10. शर्मा सुदर्शन देव (2021) दिव्य योगमय योग विज्ञान, बुक्सक्लिनिक पब्लिशिंग छत्तीसगढ़.
11. सिंह रामहर्ष (2011) स्वस्थवृत्त विज्ञान, पुनर्मुद्रण, चौखम्बा संस्कृतप्रतिष्ठान, दिल्ली.



National Journal of
Hindi & Sanskrit Research

**ISSN: 2454-9177**
NJHSR 2024; 1(52): 80-83

www.sanskritarticle.com

**पवनकुमारनागरः**
शोधच्छात्र:,शिक्षाशास्त्रविभागः,
श्रीला.ब.शा.रा.संस्कृतविश्वविद्यालयः,
नवदेहली

**Correspondence:**
**पवनकुमारनागरः**
शोधच्छात्र:,शिक्षाशास्त्रविभागः,
श्रीला.ब.शा.रा.संस्कृतविश्वविद्यालयः,
नवदेहली

# भारतीयशिक्षायाः विकासे स्वामिश्रद्धानन्दस्य योगदानम्

**पवनकुमारनागरः**

सम्प्रति शिक्षायै एजुकेशन (Education) इति आंग्लशब्दः प्रयुक्तः अस्ति। अस्येजुकेशन-शब्दस्योत्पत्तिः लैटिनभाषायाः मूलशब्दात् एजूकेटम इत्यस्मात् अभवत्। यद् इ+डुको इत्यस्य संयुक्तस्वरूपमस्ति। अत्र इ इत्यस्य अभिप्रायः अन्तर्निहितशक्तिभ्य: अस्ति तथा डुको इत्यस्य अर्थः अगेसारणम् विकसनम् बहिः आनेतुं, च अस्ति। एवं प्रकारेण एजुकेशन इति शब्दस्यार्थः भवति यत् मनुष्ये निहितमूलप्रवृत्तीनां अथवा जन्मजातशक्तीनां प्रकटीकरणम् इति। अनेन मान्यतानुसारेण पाश्चात्यशिक्षाशास्त्रीणां मतमस्ति यत् अध्यापकः छात्राय किमपि न ददाति अपितु तं निरन्तरविकासं निर्देशयति, नियन्त्रयति, प्रचोदयति च। अस्या: धारणायाः विपरीतं भारतीयमान्यतानुरूपं महान् पाश्चात्यशिक्षाशास्त्री रूसो मन्यते यत् मानवजीवने येषां शक्तीनां सद्गुणानां च अभावः भवति तस्या: प्राप्तेः साधनम् एव शिक्षा अस्ति ।

पाश्चात्यशिक्षाविचारधाराविपरीतं भारतीयचिन्तनदृष्ट्या शिक्षा निरन्तर-अधिगमस्य प्रक्रिया वर्तते। यस्मिन् मनुष्यः ज्ञानस्य आलोके सम्पूर्णं शारीरिकमानसिक-आध्यात्मिकविकासषु सम्पूर्णतां प्राप्नोति। शिक्षा शब्दस्य अर्थः भवति अधिगमः ज्ञानप्राप्ति: च । शिक्षां साधनं मत्वा 'शिक्ष्यते विद्योपार्जयतेऽनयेति शिक्षा' अस्याः व्युत्पत्त्यानुसारं येन साधनेन विधिना वा ज्ञानं लभ्यते सा शिक्षा इति कथ्यते। एवं प्रकारेण शिक्षणशब्दस्य अर्थः अध्यापन-अध्ययनयोः द्वयोः अर्थयोः गृह्यते। अतः बालकः अथवा विद्यार्थी यद् ज्ञानं प्राप्य अथवा अधिगमकृत्वा स्वीयव्यवहारे यं व्यावहारिकं परिवर्तनम् आनयति सा एव शिक्षा इति कथ्यते। अस्यां शिक्षायां अधिगमस्य साधनरूपविधिः तथा अन्ये सर्वे भागाः समाविष्टाः सन्ति। शिक्षायाः द्वितीयार्थः अस्ति यत् 'शिक्ष्यते उपादीयते विद्या यया सा शिक्षा' अर्थात् यया विद्यया उपादानम् अथवा ग्रहणं भवति सा शिक्षा एव भवति।

भारतीयविचारपरम्परायां विद्या शिक्षायाः पर्यायवाचीरूपेण प्रयुक्ता अस्ति। अतः विद्याशब्दस्योपरि विचारः आवश्यकः अस्ति। विद्याशब्दस्य उत्पत्तिः विद् धातो: करणार्थे क्यप् प्रत्ययं कृत्वा भवति। विद्धातो: अनेकार्था: सन्ति अनेन कारणेन विद्याशब्दस्य अर्थः अपि विस्तृतः सर्वांगीणः च भवति । वेदविद्यायाः निरूपणं कुर्वन् कथ्यते यत् यया मुक्तिर्मिलति अथवा यया मुक्तिं प्राप्यते सा एव शिक्षा। 'सा विद्या या विमुक्तये' अनेन प्रकारेण अध्यात्मिकशिक्षा एव विद्या इति। शास्त्रेषु विषयज्ञानम् अविद्या इति नाम्ना निर्दिष्टम् अस्ति। यजुर्वेदानुसारं अविद्यया संसारसागरं लङ्घयित्वा विद्यया अमृतत्वं प्राप्यते। उक्तं च 'अविद्यामृत्युं तीर्त्वा विद्ययामृतमश्नुते'। एवं प्रकारेण विद्या-अविद्ययोः रूपे अध्यात्मिकभौतिकज्ञानयोः पृथक्त्वेऽपि एषः उपक्रमः शिक्षायाः अधीनः वर्तते।

वर्तमानयुगस्य भारतीयमनीषिषु महर्षिदयानन्दसरस्वती शिक्षायाः अर्थं स्पष्टं कुर्वन् कथयति यत् या शिक्षा ज्ञानं, सभ्यतां, धर्मं, जितेन्द्रियतां चेत्यादीनि वर्धयति अज्ञानादिदोषान् च दूरीकरोति, तां शिक्षा इति कथ्यते। अस्मिन् विषये महात्मागांधी कथयति यत् शिक्षायाः मम अभिप्रायः मनुष्यशरीरस्य,

मनसः, आत्मनः च विकासः नाम शिक्षा। रवीन्द्रनाथटैगोरस्य मते शिक्षायाः तात्पर्यं अस्ति यत् मस्तिष्कं शाश्वतसत्यं ज्ञातुं सामर्थं उत्पाद्य तेन साकम् एकीभूय तस्य अभिव्यक्तिं कर्तुं समर्थः स्यात् । प्रमुखमनीषिभिः प्रदत्ताः शिक्षायाः परिभाषाणामनुसारं शिक्षायाः विस्तृतोद्देश्याणां परिचयः अस्माभिः प्राप्यते।

प्राचीनभारते एतादृशी अद्वितीया शिक्षाव्यवस्था आसीत् यस्याः तुलना वर्तमानकाले सभ्यसमाजस्य कस्यापि शिक्षाव्यवस्थाभ्य: न भवतुं शक्नोति। प्राचीनभारतीयशिक्षायाः क्षेत्रं केवलं विद्यालये एव सीमितः नासीत्, अपितु बालकस्य शिक्षा जन्मपूर्वं मातुः गर्भात् आरब्धा आसीत्। पितृणां विचाराणां व्यवहाराणां च प्रभावः बालकानाम् उपरि गभीरतया पतति । अत एव माता प्रथमः गुरुः, पिता द्वितीयः आचार्यः तृतीयः गुरुः इति उच्यते। शतपथब्राह्मणस्य वचनं अस्ति यत् 'मातृमान् पितृमान् आचार्यवान् पुरुषो वेद' अर्थात् केवलं सः बालकः एव ज्ञानाभ्यासे सफलं भूत्वा पूर्णविद्वान् भवितुम् अर्हति यस्य कृते पूर्णधर्माचरणयुक्तौ मातापितरौ तथा योग्याः शिक्षकाः प्राप्ताः सन्ति। एवं प्रकारेण भारतीयवाङ्मये मातापितरौ प्रथमः द्वितीयः, गुरुः मन्यते।

प्राचीनभारतीयजीवनपद्धतिः संस्कारप्रधानः आसीत्। अस्मिन् अस्यां जीवनपद्धतौ ज्ञानम् एकं संस्काररूपेण स्वीकृतम् अस्ति। वैदिककालात् एव चूडाकर्मादिसंस्कारपश्चात् मातापितृभिः बालकानां विद्यारम्भस्य प्रथा आरब्धा आसीत्। विद्यारम्भसदृशमेव वेदारम्भसंस्कारः आचार्यकुले आचार्यः करोति स्म। विद्यारम्भ-संस्कारस्य अनेकानि नामानि धर्मशास्त्रज्ञैः दत्तानि सन्ति। केचित् विद्यारम्भः, केचित् अक्षरारम्भः, तथा केचित् अक्षरस्वीकारः उवाच। यदा बालकस्य मातापितृभ्याम् आदौ उच्चारणशिक्षां तथा च नैतिकव्यवहारसम्बद्धप्राथमिकशिक्षा अददाताम्, अपरपक्षे आचार्यकुलम् आगत्य तस्य शिक्षा औपचारिकाध्ययनेन दीयते स्म अन्ततः सम्पूर्णज्ञानं प्राप्य तस्य शिक्षा पूर्णा भवति स्म। उपनयनसंस्कारस्य अनन्तरं बालकान् गुरुगृहं वा गुरुजनानाम् आश्रमेषु प्रेषयन्ति स्म। प्राचीनसमये शिक्षकाय गुरुः आचार्यः द्वयमपि सम्बोधनमासीत्। एवं शैक्षणिकसंस्थाः आचार्यकुलम्, गुरुकुलम् इति नाम्ना ख्याताः आसन्। आचार्यकुले गुरुकुले वा विद्यार्थिभ्य: शिक्षा-आवास-भोजनादीनां व्यवस्था भवति स्म अनेन कारणेन विद्यार्थी पूर्णसमयं यावत् आचार्यस्य सन्निधिं प्राप्य अध्ययनं करोति स्म, एतदर्थं विद्यार्थिनां कृते अन्तेवासिन: कथ्यते स्म। एते शिक्षणालयाः गुरोः अथवा आचार्यस्य विशद्-परिवारस्य रूपं भवति स्म। एतदर्थं गुरुकुलम्, आचार्यकुलम् च नाम्ना सम्बोध्यते स्म।

गुरुकुले गुरुमार्गदर्शने शिक्षां प्राप्य विद्यार्थिषु विधायीतत्त्वानां विकासः भवति स्म। सर्वेषां विद्यार्थिनां समानस्थितिः कारणात् तेषु पारिवारिकगर्वस्य, उच्चनीचभावनायाः हीनतायाः च समाप्तिः भवति स्म । तेषु विद्यार्थिषु अनुकूलप्रतिकूलद्वन्द्वानां सोढुं सामर्थ्यस्य विकासः भवति स्म। सर्वेषां कृते जीवनं प्रति यर्थार्थदृष्टिं प्राप्यते स्म । विद्यार्थिनां कृते अध्ययनस्य, स्वस्य वैयक्तिकसमस्यानां विषये चिन्तनस्य प्रचूरः अवसरः लभ्यते स्म। प्रकृतेः सम्पर्कात् तेषु शान्तं निर्मलं च बुद्धिर्विकसति स्म। गुरुकुलानां शिक्षाव्यवस्था सर्वतोमुखीविकासाय समर्था आसीत् यतोहि तेषु विद्यार्थिनां कृते प्रचलितसमस्तविद्यानां अध्ययनं कार्यते स्म। शिक्षासमाप्तेः अनन्तरमेव सः स्वरुच्यनुसारं स्वस्य वर्णं अर्थात् उद्योगं कार्यक्षेत्रं चिनोति स्म।

मध्यकाले भारतराष्ट्रः जाति-उपजाति-क्षेत्रेषु विभक्तः अभवत्। अनेन शिक्षा अपि प्रभाविता अभवत्। अस्मिन् काले स्वक्षेत्रमातृभाषासम्प्रदायादीनाम् आधारेण शिक्षणालयाः निर्मिताः आसन्। एते शिक्षणालयाः गुरुकुलानाम् अपेक्षया बालकाय सर्वतोन्मुखीविकासं दातुम् असमर्थाः आसन्। नवदशशताब्द्यां अनेकानाम् उत्थान-पतन-अवस्थानाम् अनन्तरं मैकालेद्वारा जन्म प्राप्यमाणा ऑङ्लशिक्षाव्यवस्था आधुनिकशिक्षाव्यवस्थारूपेण निरन्तरं प्रचलति। प्रारम्भे अस्याः शिक्षाव्यवस्थायाः उद्देश्यं क्रिश्चियनमतस्य प्रचारः ब्रिटिशसर्वकारस्य कृते कर्मचारीसज्जीकरणं च आसीत्। अस्मिन् काले गुरुकुलीया शिक्षाव्यवस्था लुप्ता आसीत्। वर्तमाने तु ऑङ्लशिक्षाव्यवस्था पूर्णतः एकपक्षीया अभवत्। अधुना विद्यार्थिनां कृते केवलम् एकस्य विषयस्य विशेषज्ञानं दीयते येन बालकस्य सर्वतोमुखीविकासः बाधितः भवति ।

नवदशशताब्द्यां महर्षिदयानन्दसरस्वती समकालीनशिक्षा-व्यवस्थातः खिन्नः भूत्वा प्राचीनभारतीयशिक्षायाः आदर्शस्वरूपं वैदिकशिक्षादर्शनं प्रस्तुतवान्। महर्षिदयानन्दस्यादर्शानुरूपं स्वामिश्रद्धानन्दः ऑग्लशिक्षायाः दुष्प्रभावान् अनुभूतवान्। यद्यपि स्वामिश्रद्धानन्दस्य पूर्वमपि आर्यसमाजस्य मनीषिभिः महर्षिदयानन्दस्य स्मृतौ वैदिकशिक्षणालयाः स्थापिताः आसन्। परन्तु एते शिक्षणालयाः प्राचीनभारतीयशिक्षायाः अनुगुणं राष्ट्रियशिक्षायाः पुनर्स्थापनां कर्तुम् असमर्थाः आसन्। प्रायः अधिकांशतया एतेषु शिक्षणालयेषु प्रचलितः सर्वकारीयपाठ्यक्रमः स्वीकृतः आसीत्। स्वामिश्रद्धानन्दः एतेन संतुष्टः न आसीत्। सः प्राचीनभारतस्य तक्षशिला नालन्दा इत्यादिप्रसिद्धशिक्षाकेन्द्रवत् वैदिकज्ञानस्य विज्ञानस्य च प्रसारार्थं शिक्षाकेन्द्रं स्थापयितुम् इच्छति स्म। अस्य कार्यस्य कृते स्वामिश्रद्धानन्दः सततं प्रयतमानोऽभवत्।

विभिन्नप्रयत्नानन्तरं 19 मई 1900 तमे वर्षे पंजाबप्रान्तस्य गुजरांवालानगरे (वर्तमाने पाकिस्तानदेशे अस्ति) गुरुकुलस्य स्थापना अभवत्। तस्मिन् समये स्वामिश्रद्धानन्दः तत्कालीन: मुंशीरामः सर्वप्रथमं स्वपुत्रद्वयस्य हरीशचन्दस्य इन्द्रस्य च गुरुकुले प्रवेशं कारितवान्। प्राचीनभारतीयशिक्षां प्रति तस्य समर्पणस्य निष्ठायाश्च एतत् सजीवं प्रमाणम् अस्ति। गुरुकुलस्य स्थापनायाः अनन्तरं स्वामिश्रद्धानन्दस्य मनसि एकः विचारः प्रचलति स्म यत् वेदानुसारं

गुरुकुलं पर्वतस्य उपत्यकायां नदीनां पवित्रसंगमे च स्थापनीयं यतोहि वेदानुसारं बुद्धिः तादृशेषु स्थानेषु विकसिता भवति। महर्षिदयानन्दः अपि पाठशालाः नगरात् ग्रामात् वा एकयोजनस्य अथवा चतुर्कोशस्य दूरे स्थापयितुं निर्देशः दत्तः आसीत्। महर्षिदयानन्दस्य वैदिक-आदर्शान् निर्देशान् च मनसि निधाय स्वामिश्रद्धानन्दः तादृशस्य स्थानस्य अन्वेषणे सततं व्यस्तः आसीत्। संयोगवशात् हरिद्वारस्य समीपस्थं कांगड़ीग्रामं तत्समीपस्थं च भूमिं नजीबाबादनगरस्य दानशीलस्य मुंशी-अमनसिंहस्य आसीत्। तेन गुरुकुलस्य स्थापनाय स्वामिश्रद्धानन्दाय एतां भूमिमुपहाररूपेण दत्ता। मुंशीरामः गुजरांवालागुरुकुले अध्ययनं कुर्वन् ब्रह्मचारी पं.गंगादत्तस्य नेतृत्वे 1902 तमे वर्षे कांगड़ीग्रामस्य समीपस्थं गुरुकुलभूमिं प्राप्तवान्। कांगड़ीग्रामस्य समीपत्वात् अस्य नाम गुरुकुलकांगड़ी इति अभवत्।

गुरुकुलकांगड़ी इत्यस्य स्थापनायां न केवलं प्राकृतिकस्थितेः प्राचीनत्वं स्वीकृतम् अपितु शिक्षायाः सम्पूर्णे आधारे उद्देश्ये च प्राचीनभारतीयशिक्षाव्यवस्थायाः तत्त्वानि समावेशितानि आसन्। प्राचीनभारते सुदामाकृष्णयोः समानजीवनं जीवितुं एकस्मिन् एव गुरुकुले शिक्षां प्राप्तुं च आदर्शः दृश्यमानः आसीत्। एतानि तत्त्वानि गुरुकुले पूर्णतया स्वीकृतानि आसन्। गुरुकुले प्रवेशं कुर्वतां धनिककुटुम्बानां निर्धनकुटुम्बानां वा बालकानां समानव्यवहारः, समानभोजनव्यवस्था, समानवेषः, समानशिक्षा च दत्ता आसीत्। प्राचीनभारतीयशिक्षायां शिक्षकम् आचार्यः तथा छात्रं ब्रह्मचारी इति नाम्ना सम्बोधनम् आसीत्, गुरुकुले अपि गुरुशिष्याभ्याम् एते सम्बोधनवचने आस्ताम्।

गुरुकुलस्य उद्देश्यं केवलं शिक्षाप्रदानम् एव नासीत् अपितु ब्रह्मचारिणां शारीरिक-मानसिक-आध्यात्मिक-विकासेभ्यः प्राचीन-भारतस्य ब्रह्मचर्याश्रमव्यवस्था पूर्णतया अंगीकृता आसीत्। महात्मा-मुशीरामः स्वयं तथा स्वीयसहयोगि-उपाध्यायगण-अधिष्ठाताजनानां सहयोगेन प्रत्येकब्रह्मचारीणाम् उपरि निकटतया सूक्ष्मदृष्टिपातं करोति स्म येन तेषां गुणदोषान् ज्ञात्वा सम्यक् मार्गदर्शनेन ब्रह्मचारिणां समुचितनिर्माणं भवेत्, एतत् सर्वं प्राचीनपरम्परानुसारं कृतम्। महात्मा मुंशीरामः प्राचीनाचार्यसदृशमेव स्वीयशिष्यान् स्निह्यति स्म। सः प्रत्येकब्रह्मचारिणां सुखदुःखयोः पूर्णरूपेण परिपालयति स्म। अनेन सम्बन्धकारणेन गुरुकुलस्य बालकाः निर्जन-हिंसक-पशु-पूर्ण-वातावरणे निवसन्तः अपि स्वपरिवारस्य कदापि स्मरणं न कुर्वन्ति स्म ।

गुरुकुले प्राचीनवैदिकसंस्कृतसाहित्यस्य अध्ययनाय प्राधान्यं दीयते स्म। प्राचीनभारतीयशिक्षाव्यवस्थानुसारं ब्रह्मचारीजनाः वेदं, वेदांगं, उपनिषदं, दर्शनं, रामायणं, महाभारतम् आदि ग्रन्थानाम् अध्ययनं कुर्वन्ति स्म। एषा परम्परा शताब्दितः विलुप्ता आसीत् अतः स्वामिश्रद्धानन्देन गुरुकुले पुनः आरब्धा। अस्य साहित्यस्य अध्ययनेन ब्रह्मचारिणां मध्ये 'वसुधैव कुटुम्बकम्' इति भावः विकसितुं साहाय्यं जातम्, तथा च तेषु जीवमात्रं प्रति प्रेमस्य संचारः भवति स्म।

स्वामिश्रद्धानन्दः गुरुकुलस्यस्थापना विंशतिशताब्द्याः आरम्भे कृतवान् अतः सः प्राचीनयुगे आधुनिकयुगे च विकसितं ज्ञानं विज्ञानं च पश्यति स्म, अत एव गुरुकुलशिक्षाव्यवस्थां व्यावहारिकं प्रगतिशीलं च कर्तुं गुरुकुले सर्वाधुनिकज्ञानस्य विज्ञानस्य च अध्ययनस्य व्यवस्था आरम्भादेव अकरोत्। तस्य योजनानुसारं गुरुकुले आयुर्वेदमहाविद्यालयः, विज्ञानमहाविद्यालयः, औषधशास्त्र-केन्द्रम् इत्यादयः स्थापिताः। एतेषु ब्रह्मचारिणां कृते व्यावसायिक-प्रशिक्षणं दत्तम् आसीत्। एषु सर्वेषु स्वामिवर्यस्य उद्देश्यम् आसीत् यत् ब्रह्मचारिणः प्राचीनसाहित्यज्ञानेन सुसज्जिताः सन्तः अपि आधुनिकज्ञानविज्ञानेषु अपि प्रवीणाः भवन्तु आत्मनिर्भरजीवनं जीवितुं जीवन्तु ।

प्राचीनभारते शिक्षायाः माध्यमः संस्कृतभाषा आसीत्। स्वामिश्रद्धानन्दः वास्तविकचिन्तकः आसीत्, सः जानाति स्म यत् संस्कृतं चिरकालं यावत् सामाजिकव्यवहारस्य भाषा नास्ति, ऑग्लमाध्यमः स्वामिवर्यस्य कृते ग्राह्यः नासीत् यतोहि सः भारतीयभाषाप्रेमी देशभक्तः आसीत् एतदर्थं सः गुरुकुले शिक्षायाः माध्यमः हिन्दीभाषात्वेन अचिनोत्। विज्ञानविषयाणामुच्चशिक्षाऽध्य-यनस्य व्यवस्था अपि हिन्दीमाध्यमेन कृता। एतत् तस्य क्रान्तिकारी कार्यम् आसीत्। सः विज्ञानविषयेषु हिन्दीभाषायां ग्रन्थनिर्माणं कारितवान्। गुरुकुलात् पूर्वं कोऽपि स्वदेशी अथवा पाश्चात्यशिक्षाप्रणाली हिन्दीभाषामाध्यमेन विज्ञानस्य उच्चशिक्षायाः कल्पना अपि न करोति स्म।

गुरुकुले शिक्षां व्यावहारिकरूपप्रदानाय स्वामिश्रद्धानन्दः आधुनिकशिक्षाव्यवस्थानुसारं अध्ययनसमयसूचीं अपि निर्धारितवान्। पूर्णदिनम् इच्छानुसारं वा एकमेव विषयं न पाठयित्वा घण्टावादनस्य प्रथा स्वीकृता। स्वामिवर्यः आधुनिकयुगे ऑग्लभाषायाः महत्त्वं बहुसम्यक्तया जानाति स्म, महर्षिदयानन्दः अपि अनेकानां भाषाणाम् अध्ययनस्य निर्देशं दत्तवान् आसीत् एतत् मनसि विचार्य गुरुकुले आरम्भात् एव ऑग्लभाषायाः अध्ययनस्य व्यवस्था कृता। स्वामिवर्यः इच्छति स्म यत् मम ब्रह्मचारिणः स्वगुरुकुलजीवने यत् ज्ञानं विज्ञानं च अर्जयन्ति, आचरन्ति तस्य अधिकाधिकं प्रचारं प्रसारं च यथासम्भवं विदेशीभाषाणां माध्यमेन कर्तुं समर्थाः भवेयुः। सः मन्यते स्म यत् न सर्वं पुरातनं शुभं न च सर्वं नवीनं त्याज्यम् इति। स्वामिश्रद्धानन्दः प्राचीन-आधुनिककालयोः समन्वयं स्थापयित्वा समृद्धशिक्षाव्यवस्थायाः विकासाय प्रतिबद्धः आसीत्।

शारीरिकविकासाय गुरुकुले नियमितव्यायामः, क्रीड़ा, तरणम् आदीनां सम्यक् व्यवस्था आसीत्। फुटबॉल-हॉकी-आद्याधुनिक-क्रीड़ाभिः सह कबड्डी, मल्लयुद्धं , तरणस्पर्धा आदि स्वदेशी क्रीड़ानां अपि विधवत् प्रशिक्षणं दापयति स्म। काले-काले समीपस्थेषु वनेषु,

पर्वतेषु, तथा अन्यस्थलेषु भ्रमणस्य योजना अपि भवति स्म। एतेन ब्रह्मचारिषु साहसं स्फूर्तिः, आत्मविश्वासः च इत्यादिभावानां विकासः भवति स्म। गुरुकुलस्य ब्रह्मचारिणः सीमितपरिसरे निवसन्तः अपि संसारस्य क्रियाकलापैः सह अपरिचिताः न भवन्तु इति सुनिश्चित्य गुरुकुले समृद्धं पुस्तकालयं पठनकक्षं च स्थापितम्। काले-काले ब्रह्मचारिणां मानसिकक्षितिजस्य विस्ताराय गोष्ठीप्रतियोगितादयः भवन्ति स्म।

स्वामिश्रद्धानन्दस्य अद्वितीयप्रयोगरूपे गुरुकुलकांगड़ी एकं एतादृशं शिक्षाकेन्द्रं जातं यस्य ब्रह्मचारिणः प्राचीनज्ञानविज्ञानस्य विद्वान्सः आसन्, आधुनिकज्ञानविज्ञानपरम्परायाम् अपि अन्यविश्व-विद्यालयीयच्छात्राणामपेक्षया उत्तमस्थाने आसन्। अत्र ब्रह्मचारिणां सर्वतामुखीविकासः भवति स्म यस्मिन् मानवजीवने अपेक्षित-समस्तविधायीतत्त्वानां समावेशः आसीत्। अत्र शैक्षिकविकासेन सह ब्रह्मचारिणां शारीरिक-मानसिक-अध्यात्मिक-विकासश्च भवति स्म।

गुरुकुलकांगड़ी इत्यस्य सफलप्रयोगेन भारतीयशिक्षाजगति नूतनक्रान्तिं आरब्धा। फलतः गुरुकुलकांगड़ी इत्यस्य सफलतायाः प्रभावेण तस्य अनेकाः शाखाः सम्पूर्णे देशे स्थापिताः तथा च अन्ये बहवः शिक्षणसंस्थाः अपि गुरुकुलस्य प्रारूपानुसारं स्थापिताः। शिक्षाक्षेत्रे ऑग्लशिक्षाविरुद्धे ऑग्लशासनविरुद्धे च गुरुकुलम् एकं स्वतन्त्रं राष्ट्रिय-आन्दोलनम् आसीत्। शिक्षाद्वारा राष्ट्रियभावनायाः विकासे गुरुकुलस्य महत्त्वं अस्य तथ्यस्य आधारेण ज्ञातुं शक्यते यत् ऑग्लसर्वकारः गुरुकुलं ब्रिटिशसाम्राज्यस्य विरुद्धं विद्रोहस्य केन्द्रं मन्यते स्म। एतस्य संशयस्य निराकरणाय यदा ऑग्लराज्यपालः जेम्समास्टन् गुरुकुलम् आगतः तदा सः आश्वस्तः भूत्वा गुरुकुलं स्वस्य आदर्शानां विद्यालयः वर्णितवान्। अन्याः अनेकाः विदेशीस्वदेशीविद्वान्सः अपि गुरुकुलमागत्य गुरुकुलस्यादर्शानां विस्तारपूर्वकं वर्णनं कृत्वा स्वग्रन्थेषु प्रशंसाः लिखिताः सन्ति।

गुरुकुलीयशिक्षाव्यवस्थायां अग्रलिखितोद्देश्यानि ध्यातव्यानि सन्ति यथा ब्रह्मचर्यस्य पुनरुद्धारः, गुरुशिष्ययोर्मध्ये पिता-पुत्रवत् सम्बन्धः, परीक्षाव्यवस्थायां परिष्कारः, शारीरिकविकासं प्रति अवधानम्, शिक्षणे हिन्दीभाषायाः प्रमुखस्थानम्, आधुनिकज्ञान-विज्ञानस्य समुचितशिक्षा, निःशुल्कशिक्षा, प्राचीनभारतीयग्रन्थेषु अन्वेषणम्, शोधकार्यस्य विशेषव्यवस्था, एतानि सर्वाणि उद्देश्यानि आधुनिकभारतस्य शिक्षाक्षेत्रे सर्वथा अद्वितीयाः, क्रान्तिकारी, सर्वतोन्मुखी-उपादेयानि उद्देश्यानि आसन्। अतः एतेषां सर्वेषां तत्त्वानां समावेशेन गुरुकुलशिक्षायाः महत्त्वं उपयोगिता च सिद्धा अभवत्। एषा एतादृशी शिक्षाविधिरस्ति या प्रकृत्या सह गमनेन प्राप्नोति। भारतस्य सर्वैः प्रसिद्धैः शिक्षाविदैः विश्वस्य अनेकैः प्रसिद्धैः विद्वद्भिः च एषा शिक्षाव्यवस्था प्रशंसिता अस्ति। अस्याः शिक्षा-व्यवस्थायाः महत्त्वं प्राकृतिकवातावरणे शिक्षाप्रदानस्य कारणेन इतोऽपि वर्धते। पाश्चात्यजगतः शिक्षाविद् रूसो अपि 'प्रकृतिं प्रति गच्छन्तु' इति उद्घोषणां कृतवान्। गुरुकुलशिक्षाव्यवस्था यथा प्राचीनकाले उपयुक्ता आसीत् तथैव आधुनिकयुगे अपि उपयोगी अस्ति। स्वामिश्रद्धानन्दः अस्याः पुनरुद्धारं कृत्वा शिक्षाजगति एतादृशं कार्यं कृतवान् यस्मिन् शिक्षाक्षेत्रस्य सर्वासां समस्यानां समाधानं भवितुं शक्नोति।

**सन्दर्भग्रन्थाः -**


भास्कर, डॉ. सुभाष, (2000) हिन्दी पत्रकारिता और स्वामी श्रद्धानन्द, सरस्वती, सरस्वती साहित्य संस्था, विकास मार्ग, नई दिल्ली।

विद्यालंकारः, पं. सत्यदेव, (2003) स्वामी श्रद्धानन्द, स्वामी श्रद्धानन्द अनुसन्धान एवं प्रकाशन केन्द्र, गुरुकुल कांगड़ी विश्वविद्यालय हरिद्वार।

कुमार, डॉ. सुरेन्द्र, (2004) महर्षि दयानन्द वर्णित शिक्षा पद्धति, वैदिक अनुसन्धान सदन, वेद मंदिर आश्रम रोहिणी, नई दिल्ली।

वाचस्पति, श्री इन्द्र, (2012) मेरे पिता स्वामी श्रद्धानन्द, श्रद्धानन्द अनुसंधान एवं प्रकाशन केन्द्र, गुरुकुल कांगड़ी विश्वविद्यालय हरिद्वार।

शर्मा, डॉ. पवित्रानन्द, (2013) स्वामी श्रद्धानन्द, ग्लोबल एक्सचेंज पब्लिशर्स, कश्मीरी गेट, नई दिल्ली।

शास्त्री, एम.वी.आर. (2016) असली महात्मा स्वामी श्रद्धानन्द का उज्ज्वल चरित्र, दुर्गा पब्लिकेशन्स, हैदराबाद।

जिज्ञासु, राजेन्द्र (2018) स्वामी श्रद्धानन्द की जीवन यात्रा, वेद प्रचारिणी सभा देवनगर महेन्द्रगढ़, हरियाणा।

स्वामी श्रद्धानन्द, (2020) कल्याण मार्ग का पथिक, विजय कुमार गोविन्दराम हासानन्द, नई सड़क दिल्ली।



National Journal of
Hindi & Sanskrit Research

**ISSN: 2454-9177**
NJHSR 2024; 1(52): 84-86

www.sanskritarticle.com

**योगेश्वरदाशः**
विद्यावारीधिः (अद्वैतवेदान्त).
राष्ट्रियसंस्कृतविश्वविद्यालयः,
तिरुपतिः

**Correspondence:**
**योगेश्वरदाशः**
विद्यावारीधिः (अद्वैतवेदान्त).
राष्ट्रियसंस्कृतविश्वविद्यालयः,
तिरुपतिः

# सौन्दर्यलहर्यां श्रुतितत्वाविचारः

**योगेश्वरदाशः**

षड्षु अपि आस्तिकदर्शनेषु अस्ति वेदान्तदर्शनं नाम सर्वदर्शनमूर्धन्यम् वेदानामन्तिमभागम् उपनिषदमाधारीकृत्य प्रणीतत्वाद् वेदान्त इति संज्ञा भजते। भगवता बादरायणेन उपनिषदां परस्परविरुद्धवत्प्रतीयमानानां वचसां समाधानाय निखिलजगदुद्धारकामनया ब्रह्मसूत्राणि प्रतीतानि। तदेव भिक्षुसूत्रापरपर्याय वेदान्तदर्शनप्रमाणमिति पश्चावर्तिभिर्विद्वद्भिः बहुशः प्रपञ्चितम्। वेदान्तसूत्राणां प्रपञ्चमाधारीकृत्य एव विविधमतानि प्रादुर्भूतानि। तत्र भगवता शङ्कराचार्येण शारीरकभाष्येण अद्वैतवादः प्रचारितः। रामानुजेन श्रीभाष्यद्वारा विशिष्टाद्वैतम्, मध्यमुनिना पूर्णप्रज्ञभाष्यद्वारा द्वैतम्, भास्करेण भास्करभाष्यद्वारा भेदाभेदम्, निम्बार्केण वेदान्तपरिजातभाष्येण द्वैताद्वेतम्, श्रीकण्ठेन शैवभाष्यद्वारा शैवविशिष्टाद्वैतम्, श्रीपतिना श्रीकरभाष्येण वीरशैवविशिष्टाद्वैतम्, वल्लभेन अनुभाष्येण शुद्धाद्वैतम्, विज्ञानभिक्षुणा विज्ञानामृतभाष्येण अविभागाद्वैतम्, बलदेवेन च गोविन्दभाष्यद्वारा अचिन्त्यभेदाभेदमिति मतानि प्रतिपादितानि प्रचारितानि च। संस्कृतवाङमयं सर्वपुरातनमिति सम्प्रति सर्वैः स्वीक्रियते। मुख्यत्वेन वेदाः-दर्शनम्-काव्यानि-उपनिषदः-नाटकानि-पुराणानि-शास्त्राणि भवन्ति। तत्र च भारतीयचिन्तनस्य मुख्यं तत्त्वं दर्शने शास्त्रे च निहितं वर्तते।

संसारानलसन्तप्तानां सकलमानवानां भवबन्धविमुक्तये शास्त्रेषु उपायाः विहितास्सन्ति । तदर्थं सत्स्वपि अनेकेषु उपायेषु शास्त्राध्यनं तत्प्रतिपादितमार्गानुसरणमेव एकमात्रं शरणम्। शास्त्रेष्वपि दर्शनशास्त्रं वास्तविकं तत्त्व द्योतयति प्रकृतमार्गश्च दर्शयति । अतः भारतीयास्तिकदर्शनपरम्परायाम् ऋषिप्रभृतिभिः अनेकानि शास्त्राणि रचितानि । तदनुगताश्च अनेके तदुपरि मननमकार्षुः। तत्र चार्वाक-माध्यमिक-योगाचार-सौत्रान्तिक-वैभाषिकादीनि, किन्तु तदादौ अमृतमयमिव भवति। तस्य परिणामः विषं भवति। अत भारतीयचिन्तनेषु आस्तिकदर्शनानां महत्त्वमधिकं दरीदृश्यते। तत्र वैशेषिक-न्याय-सांख्य-योग-पूर्वमीमांसा उत्तरमीमासा चेति षडास्तिकदर्शनानि भवन्ति। एतेषां निःश्रेयसाधिगमत्वात् निरतिशयसुखप्रदातृत्वात् नास्तिकदर्शनापेक्षया अभ्यर्हितत्वं शास्त्रकारैरङ्गीकृतम्।

भाष्येष्वेतेषु शङ्कराचार्यकृतं शारीरकभाष्यं प्राचीनतमत्वात्, तर्कसहत्वाच्च विशिष्यस्थानं भजते। अत्रैव वेदान्तदर्शनं सम्यक् प्रपञ्चितमिति मनीषिणः स्वीकुर्वन्ति। वस्तुतः शङ्कराचार्यप्रतिपादितः अद्वैतमार्ग एव वेदान्ते स्वीकृतः ।

वेदान्तशास्त्रानुसारम् अद्वितीयं ब्रह्मैव सत्यम्, तदतिरिक्तमन्यत् सर्व मिथ्यैव। जगदादिसर्वं शुक्तौ रजतमिव अवभासते। ब्रह्म निर्गुणमत एव शब्दैरप्रतिपाद्यम्। अतः सदानन्दयोगीन्द्रविरचित-वेदान्तसारग्रन्थे एवमुच्यते 'अवाङ्मनसगोचरमिति"। सर्वज्ञत्वादयः गुणाः ब्रह्मणि औपाधिका एव । जीवः ब्रह्मरूपोऽपि अज्ञानात् भिन्न इव भाति। मनोबुद्ध्याद्युपाधिभिः सर्वोऽपि जनः अहमिति प्रत्येति । तदर्थं सुषुप्तौ मनोबुद्ध्यादिलयेन अहमाकारप्रतीतेरभावः परिलक्ष्यते। एवमेव मोक्षावस्थायामपि उपाधिलयात् अहमाकारप्रतीतेरभाव एवञ्च अहमिति प्रतीतिरौपाधिकी।

अयं प्रतीतिक: जीवोपाधिभेदेन जीवानां सुखदु:खानुभवभेद:। चैतन्यं सर्वव्यापकं तदेव आत्मेत्यभिधीयते। अयमात्मा ईश्वर-साक्षी-जीवभेदेन त्रिविध: इति अज्ञानवशात् विविच्यते। यतो हि सर्वं जगन्मूलकारणम् अज्ञानमेव। भगवत्पादानां मतानुसारम् आत्मस्वरूपप्रकाशनेन एव अज्ञानान्धाकार निवर्त्तते। अतः भगर्वीतायां प्रोच्यते- 'आध्यात्मविद्या विद्यानामिति"। वादरायणमहर्षिप्रभृतय: वेदान्तस्य निगूढं मूलभूतं तत्वं लोकाना-मुपकाराय लोककल्याणाय च ग्रन्थरूपेण प्राचिकादिषु। तेन क्रमेण शङ्करस्य परमावतारभूत: आचार्य: श्रीमच्छंकरभगवत्पाद: तमेव वेदान्ततत्त्वम् अग्रे सारयितुं नूतनाम् अभिनवां च दिशं प्रदर्शयितुं भूपृष्टम् अवततार । केनचित् उक्तम् - 'चतुर्भि: सहशिष्यैस्तु शङ्करोऽवतरिष्यति" इति । भगवता कृष्णाद्वेपायनेन वेदव्यासेन प्रोक्तम् - ' उपनिषत्सारभूतं सूत्रजातं ब्रह्मसूत्रमिति प्रथते"। अद्वैत - विशिष्टाद्वैत द्वैतनामकस्य मतत्रयस्य एष: सूत्रग्रन्थ एव प्रमाणम्। तत्र अद्वैतमार्गोद्धाटका: श्रीशङ्करभगवत्पादा: ईशकेनाद्युपनिषदां, ब्रह्मसूत्राणां, भगर्वीतायाश्च भाष्याणि निर्माय जिज्ञासुं लोकमनु-जगृहु:। एतत् त्रयं प्रस्थानत्रयभाष्यमिति प्रसिध्यति।

तत्त्वमसीत्यादिमहावाक्यसमन्वयपूर्वकं निखिलवेदान्तप्रतिपादितमद्वैत क्षोदक्षमं विचार्य जर्गुरुभि: प्रस्थानत्रये यो ह्य निर्द्धारित: स उत्तमाधिकारिणमुदेयो भवति। स एवार्थ: मध्यममन्दाधिकारिणामपि अवगमनाय भगवत्पादास्सुगमं मार्गान्तरमाकल्पयामासु:। विवेकचूडामणि: आत्मानात्मविवेक:-आत्मबोध:-अद्वैतानुभूति:- वाक्यवृत्तिरित्यादिप्रकरणग्रन्थान् विरच्य सर्वान्ते इदमन्वभवन् यत् सरल सुललितं च अद्वैतं तत्त्व जनसमान्येषु वितरणीयं प्रसारणीयश्च । एतन्मनसि निधाय बहून् प्रकरणग्रन्थान्-स्तोत्रग्रन्थान् च व्यरचयन्। तेषु रचितेषु ग्रन्थेषु शिवानन्दलहरी-गङ्गास्तोत्रम्-सौन्दर्यलहरी-अज्ञानबोधिनी- मनीषापञ्चकम्-विवेक-चूडामणी-आत्मानात्मविवेक: इत्यादय: प्रसिद्धा:। एतेषु सौन्दर्य-लहरी अत्यन्तं प्रसिद्ध: ग्रन्थ: ।

पराशिवाभिन्नां परशक्तिं स्तुतिलक्ष्यतया प्रस्तुवन्त: भगवत्पादा: शिव: शक्त्या युक्तो यदि भवतीत्याद्यश्लोकेन परप्रकाशभूत-शिवस्फूर्तिरूपां विमर्शख्यां परां शक्तिं स्तुवन्ति। स्तोत्रेऽस्मिन् सा सगुणा, निष्कला, योगिमात्रध्येया चिन्द्रूपिणी, तत्तच्चकाधिष्ठात्री कुण्डलिनी, परा वाक्, शिवशक्तिसामरस्यपरायणा, मन्त्ररूपिणी, यन्त्ररूपिणी, स्वतन्त्ररूपिणी, अन्तर्यागक्रमाराध्या, बहिर्यागसमा-राध्या, बहुधा स्फुरन्ती सा सर्वप्रकृतिभूता, सच्चिदानन्दं परं ब्रह्मेति तामधिकृत्य ज्ञेयमखिलं संगृह्णन्ति स्तुतिरूपतया निबद्धत्वात् साधकै: साक्षाद्देव्या सह सम्रस्यप्राप्तिं भावनामय्य स्तोत्रपद्धत्या अनुगृह्णन्ति।

सुन्दरीति नाम्ना परा षोडशी प्रख्याता। तस्या इदं सौन्दर्यम् । तस्य लहरी, तदेव विमर्शरूपम्। सैव सौन्दर्यलहरी। तामधिकृत्य कृतेयं स्तुतिरपि सैव। अस्या लहर्या: शब्दात्मकत्वेनानुभूयमानत्वे स्तुतित्वं साधनत्वञ्च। स्तुतिप्रतिपाद्यदेवतास्वरूपानुसन्धाने सम्पन्ने स्तुतिरन्या तत्प्रतिपाद्या देवताऽन्येति भेदे स्वयं विगलिति, सौन्दर्यलहरीस्तुतिरेव देवता भवति । ब्रह्मविद्वरिष्ठानां भगवत्पादानां वाचि ब्रह्मैव लहरीत्वेन प्रवृत्तं तदनुसन्धातॄणां मनस्यापि तथैवानुप्रविश्यति इति तदनुसन्धातार: स्वयमनुभवन्ति। ग्रन्थप्रतिपाद्यं वस्तु विमृशाम: स्वचित्तशुद्ध्यै।

विश्वोत्तरप्रकाशत्मा परमशिव:। तदनन्या पराशक्ति: प्राणिनामदृष्टवशात् स्वान्त:संहृतविश्वसिसृक्षया, स्फुरति। तच्च स्फुरणं विमर्श:। म च व्यज्यते इच्छा ज्ञान क्रियात्मना। तत: प्रपञ्चसृष्टि:। 'पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबल क्रिया च।।" 'तदैक्षत बहु स्यां प्रजायेय" इति परशिवाभिन्नपराशक्ते:, स्वनिष्ठस्फुरता दर्शनविषयिणी इच्छारूपा प्रथमा वृत्ति:, वहु स्यामिति स्फुरणस्वरूपसंकेत:, तत: ज्ञान क्रियाभ्यां प्रपञ्चप्रताननम् इति क्रम:। तत्र शिवस्य शक्त्यपेक्षिणी स्फूर्ति:। प्रकाशस्य ह्येष स्वभाव:, विषयव्यात्पैव स्वस्फूर्ति: इति । आतपचन्द्रिकादोनामपि गृहाङ्गणादि सम्बन्ध एव स्फूर्तिदर्शनात्। तत: प्रकाश: विषयाधीनस्फूर्तिमान् । विषयोऽपि प्रकाशसम्बन्धेनैव स्फुरति इति त्वन्यत्। विश्वविमर्शरूपया: पराशक्तेः स्फुरणं विना प्रकाशस्य विषयीभाव एव नास्ति । सृष्टिमहं वितनुयां इत्याकारिक्या प्रथमया वृत्या इच्छा-ज्ञान-क्रियात्मिकया लोकसृष्टि: । हरिहरिविरिञ्चाद्या: तत्राधिकारिण: तद्वृत्तिजाता:। परदेवताराधानलब्धकौशला: तत्र ते प्रभवन्ति। षड्विंशत्वात्मकं हि प्रपञ्चं ते सृजन्ति, अवन्ति, लयतिरोधानानुग्रहान् प्रणयन्ति इति घटीयन्त्रस्थघटानामिव पुन: पुन: आवृत्या लहरीभूतं विश्वं सिद्धवत्कुर्वन्ति। अत: प्रकाशात्मन: परशिवस्य प्रस्पन्दसंविदेषा स्फुरत्तालहरीयुता सुन्दरी स्वात्मनी विश्वलहरीं प्रख्यापयतीति तस्या: सौन्दर्यालहरीं प्रस्तुवन्त्याचार्या:। प्रकाशस्य विमर्शाधीनस्फूर्तिकत्वं शिव: शक्त्येत्यादिना सरलया वैखर्या ज्ञापयन्ति। शक्त्या विना शिवे सूक्ष्मे नाम धाम न विद्यते । प्रपञ्चसृष्टि-स्थिति-संहारव्यावृत्तानां विरिंच्यादीनां तत्तत्कर्मस्वनु-ग्राहकं श्रीदेवीचरणप्रभावं, प्रलीनस्य जगत: पुन: सृष्ट्युन्मुखीकरणाय पुररिपुक्षोभस्य कामविजयस्य च प्रसङ्गं बहुत्र वर्णयन्त:, विमर्शरूपिण्या: तस्या ध्यानयोग्यं वपु:, तत्स्थानसंकेतञ्च 'क्वणत्काञ्चीदामा" 'सुधासिन्धोर्मध्ये" इति श्लोकाभ्यां वर्णयन्ति वचोमनोग्राह्यतया।

विमर्शरूपिणी श्रीमता इच्छाशक्ति-ज्ञानशक्ति-क्रियाशक्तिस्व-रूपिणी मातृत्रयात्मिका जाता। तत: त्रिपुरा सा मूलप्रकृति:, अव्यक्ता, व्यक्ताव्यक्तस्वरूपिणी, व्यापिनी, विविधाकारा इति क्रमशोऽवतरन्ती विश्वलहरीभूता विविधाकृतिमत्सु व्यक्तिषु तत्र तत्र तदङ्गोपाङ्गेषु

विशिष्टशक्तिपुञ्जात्मना सुधासाराभिवर्षिणी विलसन्ती चेतयतित्यमुं अर्थं, देव्या: सूक्ष्मं विश्वानुप्रवेशं, 'मही मूलाधारे" 'सुधाधारासारै:" इति श्लोकाभ्यां प्रदर्शयन्ति ।

प्रकाशविमर्शसामरस्यरूपिण्या: परायाः चिच्छक्तेरस्या: अभ्यासातिशयज्ञेयाया: सङ्केतत्रयमस्ति । चक्रसङ्केतो मन्त्रसङ्केत: पूजासङ्केत इति । सङ्केतत्रये विदिते सा आबालगोपविदिता भवतीति कृपया चक्रसङ्केतं 'चतुर्भि: श्रीकण्ठै:" इति, मन्त्रसङ्केतं 'शिव: शक्ति:" इति, भावनामयपूजासङ्केत 'जपो जल्प" इति च श्लोकै: प्रकटयन्ति ।

चक्र द्विविधं बाह्यमाभ्यान्तरं च। बहिश्चक्ररूपिण्या आराधनं बहिर्याग:। अन्तश्चक्ररूपिण्या देव्या आराधनं अन्तर्याग: । तच्चन्तश्चक्रं कुण्डलिन्याधिष्ठान षट्चक्रमयम्। तत्र तत्त्वासना तत्त्वमयी षट्चक्रोपरिसंस्थिता, बिसतन्तुतनीयसी शिर:स्थिता चन्द्रनिभा भालस्था इन्द्रधनु:प्रभा, हृदयास्था रविप्रख्या, तटिल्लतासमरुचि:, त्रिकोणान्तरदीपिका इति भावनासुगमां सपरिवारां मूर्ति 'क्षितौ षट्पञ्चाशत् " 'तटिल्लेखातन्वी" इति श्लोकाभ्यां प्रकाशयन्त:, स्थानविशेषानुरूपां तस्या: रूपगुणक्रियाफक्किकां 'तवाज्ञाचक्रस्थं" इत्यादिभि: षड्भि: श्लोकै: प्रकटयन्ति ।

मन्त्रसङ्केते च विशिष्टानां पद्धतीनां दिग्दर्शनं 'स्मरं योनिं लक्ष्मी" इति श्लोकेन, सङ्केतत्रयस्वरूपाधिगमाय स्वतन्त्रं तत्तन्त्रं 'चतु:षष्ट्या तन्त्रै:" इति श्लोकेन च प्रदर्शयन्ति।

वाङ्मयी काचन श्रीमातुर्मूर्ति:। परा पश्यन्ती मध्यमा वैखरीति क्रमात् साधकानुग्रहाय क्रमादवतरणं तस्या:। तत्र शब्दार्थयो: अंकुरतच्छाययोरिव परस्पसंपृक्तयोरेव उत्पत्तिः । तत्र अकार: शिवस्य रूपं, हकार: शक्तेः। तौ चाकारहकारौ न वैखरीत्वेन स्थूलरूपावेव। सूक्ष्म-सूक्ष्मतर-सूक्ष्मतमरूपत्वमपि तयोरस्तीति तत्तत्वविद:। अकार एव सविसर्गो हकारो भवति । 'अकार: सर्ववर्णाग्र्य: प्रकाश: परम: शिवः" इति संकेतपद्धति:। 'अ इति ब्रह्म" इति श्रुति:। निरस्तनिखिलप्रपञ्चं ब्रह्म अकारात्मना भाति । तदेव बिन्दुर्भवति। ततो विमर्शशक्तेर्लहरी हकारात्मिका बिन्दुद्वयात्मकविसर्गोपेता। बिन्दु: काम:। तस्य कला विसर्ग: बिन्दुद्वयरूप: । शिवशक्त्यो: संभेदे कामबिन्दो: शोणितबिन्दुना सह संयोगे परस्परानुप्रविष्टत्वे शिवशक्त्यो: परस्परसंभिन्नावस्था कामकला, कामविशिष्टा कला, कामश्च कला चेति वा। ईदृशसमष्टिरूपकामकलाया: ईकारो रूपम्। ईकारस्य कामकलत्येव नाम। अत एव प्राच्यलिपिषु कामविसर्गकलानां अवयवभावेन प्रदर्शनं दृश्यते। तत्र कामकलारूपस्य ईकारस्य लेखने, शिरसि बिन्दु:, तदध: तिर्यक् बिन्दुद्वयं, तदधो हंसपदमिति क्रमं प्रदर्शयन्ति सांप्रदायिका:। शिवशक्त्योरैक्ये संभवन्तमानन्दं कामालयरूपतया हंसपदेन व्यञ्जयन्ति । योनि:, हकारार्धं, सपरार्धमिति नाम्ना तं व्यवहरन्ति। हकाराक्षरस्य लेखनक्रमे अधोभाग: अधोमुखस्त्रिकोणो भवति। हकारो विमर्श: शक्ति:, तद्द्योतकमर्धं योनिरूपं त्रिकोणात्मकं हकारार्धं भवति। सकारात्परतया हकारस्य, तस्य सपरत्वमपि। शिवरूपं बिन्दुं, शक्तिरूपं बिन्दुद्वयं शिवशक्त्यैक्यरूपमानन्दं च कामकलां ध्यायति साधक:। समष्टिरेतेषां देवीरूपेण भाति। 'मुखं बिन्दुं कृत्वा कुचयुगमधस्तस्य, तदधो हरार्धं ध्यायेत् " इति कामकलाध्याने सुगमं मार्गं प्रदर्शयन्त्याचार्या:। अस्य कामकलारूपस्य ईकारस्य मूर्त्यात्मना प्रत्यक्षीकरणं काञ्चीमध्यगत- कामाक्ष्यालये देव्या वामत: अरूपकामाक्षी इति सन्निवेशसुषमाया सुलभ भवति ।

साधकानुग्रहकृते गृहीतबहुविग्रहाया: देव्या: ध्यानयोग्या: विभूती: 'रारज्ज्योत्स्नाशुद्धां" 'सवित्रीभिर्वाचां" इति बहुभि: श्लोकै: साधकमनोगम्या आतन्वन्त आचार्या: श्रीमातु: अङ्गप्रत्यङ्गसौष्ठवं वशिन्यादिभि: स्वानुभूतगीतं पञ्चाशद्भि: श्लोकैरुपश्लोकयन्ति। परब्रह्ममहिष्यास्तस्याः परमपरं च सौन्दर्यं भावयन्त:, तच्चरणयोर्मधुकरत्वेन निमज्जनं, 'ममाप्येतौ मात: शिरसि दयया धेहि चरणौ" इति शिरसि तच्चरणवहनयोग्यतां, 'दृशा दीनं स्नपय कृपया मामपि शिवे" इति तत्कटाक्षपातं च तदनुग्रहैकलभ्यं प्रार्थयन्त:, 'मयि जननि दृष्टि: सकरुणा" इति तल्लाभमनुभवन्त: स्तुति: स्तवक: स्तव्या इति त्रिपुट्या: देव्यनुग्रहात् विलयं 'प्रदीपज्वालाभि:" इति श्लोकेन अनुभवन्ति । सौन्दर्यलहरीमेनां देवीश्लोकरूपेण, मन्त्ररूपेरण, भावनारूपेण चानुभवन्त: अव्याजकरुणामूर्ते: श्रीमातु:, अभ्युदयदर्शनार्थकगृहीताज्ञानध्वान्तदीपिकात्मकभगवत्पाद-श्रीशङ्करदेशिकरूपाया: गुरुमूर्ते: अनुग्रहात् परमाह्लादलहरीं अनुभवन्तीति ।

**सहायकग्रन्थसुची -**


१. सौन्दर्यलहरी - शङ्कराचार्य: जवहार नगर, दिल्ली -१९९१
२. सिद्धान्तलेशसंग्रह:- अप्पयदीक्षित: - अच्युतग्रन्थमाला, वाराणासी -१९२५
३. सिद्धान्तबिन्दु: - श्रीमधुसूदन सरस्वतीकृत:, दक्षिणामूर्त्तिमठ: वाराणसी -१९७५
४. श्रीमद्भगवीता शाङ्करभाष्यम- शङ्कराचार्य:, गीताप्रेसु, गोरख-पुरम् -१९९९
५. विवेकचूडामणि:- शङ्कराचार्य: - अद्वैताश्रम:, कोलकत्ता -२०००
६. संक्षेपशारीरकम्- सर्वज्ञात्ममुनिः उदासीन.सं. विद्यालय: वारणासी- १९५६
७. शङ्करदिग्विजय:- माधवाचार्य:-ज्ञानमन्दिरम्, हरिद्वारम् -२०००
८. सिद्दान्तकौमुदी - भट्टोजीदीक्षित: - चौखम्वा संस्कृत सीरीज्, वाराणसी -१९६५



National Journal of
Hindi & Sanskrit Research

**ISSN: 2454-9177**
NJHSR 2024; 1(52): 91-94

www.sanskritarticle.com

**कोसुलु गोविन्दराजुलु**
शोधच्छात्रः, साहित्यविभागः,
राष्ट्रियसंस्कृतविश्वविद्यालयः,
तिरुपतिः, आ.प्र.

**Correspondence:**
**कोसुलु गोविन्दराजुलु**
शोधच्छात्रः, साहित्यविभागः,
राष्ट्रियसंस्कृतविश्वविद्यालयः,
तिरुपतिः, आ.प्र.

# श्रीरामभद्रसाहस्रमञ्जर्यां दुःखापवर्गविचारः

**कोसुलु गोविन्दराजुलु**

[**शोधसारांशः** – रामभद्रदीक्षितमहोदयाः राघवभक्तिसाहित्यस्य देदीप्यमानाः पण्डिताः सन्ति। तैः नैकानि स्तोत्राणि रचितानि। तेषां सर्वेषामपि एकत्र संग्रहं कृत्वा रामभद्रसाहस्रमञ्जरीति ग्रन्धः प्रकाशितः। तस्मिन् ग्रन्थे सहस्राधिकानि पद्यानि विलसन्ति । तेषु नैके प्रमेयांशाः प्रतिपादिताः। यथा – आत्मा, शरीरमित्यादयः। अत्र दुःखम्, अपवर्गः इति प्रमेयांशद्वयं उल्लिखितम् । रामभद्रवर्याः अनयोः विषये स्वस्तोत्रेषु किं लिखन्ति तदस्मिन् शोधलेखे प्रस्तूयते ।**]**

**(1)दुःखविचारः -**

**न्यायदर्शने उच्यते "बाधनालक्षणं दुःखम्"** (सू.21) । एकादशः प्रमेयोऽयम्। बाधना, पीडा, तापः इति दुःखस्य पर्यायाः। यः प्रमेयः केवलम् अधर्मान्वितः, यः सर्वेषां जीवानां प्रतिकूलः प्रतीयते स एव दुःखमित्युच्यते। अत्र एकविंशतिः दुःखानि प्रोक्तानि । यथा - षड् ज्ञानेन्द्रियाणि (घ्राणम्, रसना, चक्षुः, त्वक्, श्रोत्रम्, मनः), एतेषां षड् विषयाः (गन्धः, रसः, रूपम्, स्पर्शः, शब्दः, रागद्वेषमोहाश्च), विषयेन्द्रियाणां सम्पर्कात् जायमानाः षड् विषयानुभवाः, शरीरम्, सुखं, दुःखञ्चेति । एतेषु दुःखं स्वभावतः द्वेष्यमिति हेतोः मुख्यं भवति । किन्तु सुखं मुख्यदुःखेन अनुविद्धं तथा च अन्ये उनविंशतिसंख्याकानि तत्त्वानि दुःखस्य कारणानि इति कारणात् एतानि गौणदुःखानि इति कथ्यन्ते ।

इतोऽपि सांख्यदर्शने दुःखत्रयस्य निरूपणं क्रियते । यता – (1) आध्यात्मिकं दुःखम् (2) आधिदैविकं दुःखम् (3) आधिभौतिकं दुःखञ्च । आध्यात्मिकं दुःखं शारीरकं मानसिकमिति द्विविधम्। जरव्याधिजनितं दुःखं शारीरकं दुःखमित्युच्यते। दुर्जनसङ्गतिः आत्मीयवियोगः मानसिकं दुःखमित्युक्तम् । देवेभ्यः जातानि अशनिपातादीनि आधिदैविकानि दुःखानि भवन्ति । तथैव भूतेभ्यः अण्डज-स्वेदजादिभ्यः जातानि दुःखानि आधिभौतिकानि भवन्ति ।

कविः रामभद्रः स्वस्तोत्रकाव्येषु बहुत्रात्मनः दुःखस्य तापस्य यन्त्रणायाश्च उल्लेखं करोति, तत्तापनाशाय च भगवते श्रीरामचन्द्राय निवेदयति । यथा –

**लङ्केशपङ्कजमुखीललितावसान-**
**दानप्रहर्षितमहर्षिसुपर्वलोकः।**
**चक्राङ्गवाहितशताङ्गपुमुक्तरूप-**
**स्तापं स मे हरतु तापनवंशदीपः।।**[1]

अत्र कवेः सन्तापः उल्लिखितः, तस्यापहरणं तापनस्य सूर्यस्य वंशे जातः प्रदीपतुल्यः श्रीरामचन्द्रः करोतु इति निवेद्यते ।

दुःखमान्तरमन्धकारं जनयति। अनेन वाधना पीडा च जायते। तदान्तरमन्धकारं विद्रावयति राघवस्य बोधमुद्रा यस्याः प्राप्त्यर्थं कविः प्रार्थयते । तन्मन्त्रेण च यथा जगत्पवित्रितं जायते तथैव कविः आत्मनः पवित्रतामिच्छति तन्मन्त्रजपं कर्त्तुम् । यथा –

**भद्राय मेऽस्तु तव राघव बोधमुद्रा**
**विद्रावयन्त्यखिलमान्तरमन्धकारम्।**
**मन्त्रस्य ते परिपुनन्ति जगद्यथा ष-**
**डष्टाक्षराण्यपि तथेति विवृण्वतीव।।**[2]

शरीरं रोगमन्दिरमित्युच्यते। अत्र नैके दोषाः विद्यन्ते। त्रिविधतापेषु आध्यात्मिकतापः द्विविधो भवति। यथा – शारीरकः, मानसिकश्च। शरीरे रोगाः तापं जनयन्ति। कविः रामभद्रः गात्रेषु यत्कष्टमस्ति, मानसे या लोलुपता वर्तते तत्सर्वं त्यक्तुमुपदिशति। शरीरसम्बन्धिकष्टेषु गात्रजनितश्रमः, उदरजनिताग्निमान्द्यदोषः, नेत्रयोः श्रोत्रयोश्च जडता, जरा इत्यादयः प्रधानाः भवन्ति । एवमेव कलियुगेऽस्मिन् धनाशा मानसपीडाकारणं भवति । अतः एतत्सर्वं त्यक्त्वा कविः श्रीरामचन्द्रे एवं रतिं कर्त्तुमिच्छति । तदुच्यते तेन –

**गात्रेषु श्रममग्निमान्द्यमुदरे नेत्रे जडत्वं सह**
**श्रोत्रेणादिशती जरा विशति चेत्कोऽत्रेरयेन्मास्त्विति।**
**दात्रे यत्तु नमोऽधुनापि कलये स्तोत्रेण वित्ताशया**
**मैत्रे जन्मजुषे कुले कृतनतिर्नेत्रे तदुज्झाम्यहम्।।**[3]

**2) अपवर्गविचारः**

**"तदत्यन्तविमोक्षोऽपवर्गः"** (सू.22)। दुःखानामात्यन्तिकनिवृत्तिरेव अपवर्गः इति निगद्यते। अस्यापवर्गस्य प्राप्त्युपायः उच्यते गौतमेन- **"दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तरापायादपवर्गः"** (सू.2)। अर्थात् तत्त्वज्ञानोदये मिथ्याज्ञानं नश्यति। मिथ्याज्ञानाभावे रागद्वेषात्मिका प्रवृत्तिः न जायते। प्रवृत्त्यभावे संसारे कस्यापि जन्म न भवति। यदा जन्म एव नास्ति तर्हि दुःखानां भोगः कुत्र ? नास्त्येव दुःखभोगः। स एव अपवर्गः।

कविः श्रीरामचन्द्रस्य स्वरूपं ज्ञात्वा निखिलेभ्यः सांसारिकतापेभ्यः मुक्तस्सन् शमं प्राप्तवान् इति काव्यिकशैल्या उत्तमतया प्रतिपादयति । अयं श्रीरामचन्द्रः नीलवर्णः मेघवद्भवति। यदा आकाशाद् मेघवृष्टिः भवति, तदाऽदौ पर्वतशृङ्गेषु पतति। कविमतेन अयं मेघश्यामः श्रीरामः समराङ्गणे राक्षसान् निहत्य रक्षोवधूनाम् चक्षुर्भ्याम् अश्रुपातस्य कारणं बभूव। तानि अश्रुणि निःसृत्य मेघवारिणां पर्वतशृङ्गपतनवत् वक्षःस्थले पतन्ति स्म । अपि च यथा मेघं दृष्ट्वा मयूराः नृत्यन्ति, आनन्दिताः भवन्ति, शमं प्राप्नुवन्ति तेषां दुःखमपसरति, तथैव कवेः सन्तापः दुःखं श्रीरामचन्द्रस्य दर्शनेन अपसरितः शमतां प्राप्तवान् इति उच्यते। अयमेव भवति अपवर्गावस्था चिरन्तनसुखावस्था । तदुच्यते कविना –

**कुवलयदलनीलः कोऽपि रक्षोवधूनां**
**कुचगिरिषु निपातं बास्पवृष्टेर्विधाता।**
**निखिलभुवनचेतोबर्हिनृत्तैकहेतुः**
**शमयति मम तापं शाङ्र्गवानम्बुवाहः।।**[4]

मिथ्याज्ञानस्य विनाशे तथा ज्ञानोदये सति मुक्तिः अपवर्गो वा प्राप्यते इति कविः श्रीरामभद्रः पुनः पुनः स्वस्तोत्रेषु उल्लिखति । वर्णमालास्तोत्रेऽपि तेनोच्यते –

**ज्ञानेन मुक्तिरिति निश्चितमागमज्ञै-**
**र्ज्ञानं क्व मे भवतु दुस्त्यजवासनस्य।**
**देवाभयं वितर किं न्वसकृत्प्रपत्त्या**
**मह्यं न विस्मर पुरैव कृतां प्रतिज्ञाम्।।**[5]

अर्थात् हे प्रभो रामचन्द्र अहमिदानीं सासांरिकभोगेषु लिप्तः वासनाग्रस्तः जीवः अविद्यापतितः मायापतितः दुःखमनुभवामि। मम सर्वत्र मिथ्याज्ञानमेव जायते । तदर्थमहं भवतः शरणापन्नो भवामि। मम कृते उचितं ज्ञानं प्रदेहि । तेनैव ज्ञानेन मम मुक्तिः अपवर्गो वा सम्भविष्यति । अत्र प्रपत्तिः इति शब्दः कायेन वाचा मनसा इन्द्रियैश्च साकं सम्पूर्णरूपेण भगवतः शरणापन्नता इति दार्शनिकाभिप्रायः। मुक्तेः नैके मार्गाः दार्शनिकैः प्रतिपादिताः। सांख्ये पञ्चविंशतितत्त्वज्ञानस्योल्लेखः क्रियते। योगदर्शने अष्टाङ्गयोग-साधनम्, सांख्यानामिव षड्विंशतितत्त्वज्ञानं तथा ईश्वरप्रणिधानं मुक्तेः साधनानि प्रतिपादितानि । न्यायवैशेषिकयोः पदार्थज्ञानं मुक्तेः कारणमित्युच्यते । मीमांसायां यज्ञः स्वर्गफलं ददातीति निगद्यते। वेदान्तधारायाम् आत्मदर्शनम्, ईश्वरभक्तिः, ईश्वरशरणागतिः, ईश्वरप्रपत्तिः इति मार्गाः मुक्त्यर्थं निर्दिष्टाः। कविः रामभद्रः अत्र प्रपत्तिमार्गं दर्शयति अपवर्गाय । उच्यते च श्रीरामेण –

**सकृदेव प्रपन्नाय तवास्मीति च याचते।**
**अभयं सर्वभूतेभ्यो ददाम्येतद् व्रतं मम।।**[6] इति ।

प्रपत्तिः तत्र भवति यत्र कठोरसाधनायाः आवश्यकता नास्ति, न च नित्यनैमित्तिक-स्वाध्यायस्य प्रसङ्गः तत्रागच्छति। न तत्र अष्टाङ्गयोगसाधना अपेक्षते। कदाचित् विपत्तौ पतितः मानवः यदि एकवारमेव भगवतः शरणं गच्छति, तन्नामोच्चारणं करोति, तर्हिः प्रपन्नं तं रक्षितं भगवान् स्वयमागच्छति मुक्तिञ्च ददाति। आजीवनं पापानि कृत्वा अजामिलः मृत्युसमये भगवन्तं स्मृत्वा वैकुण्ठलोकं प्राप्तवानिति कथा श्रूयते । भगवान् श्रीकृष्णाय अर्जुनोऽपि युद्धक्षेत्रे वदति – "शिष्यस्तेऽहं साधि मां त्वं प्रपन्नम्" इति । कविः श्रीरामभद्रोऽपि दुस्त्यजवासनः श्रीरामप्रपत्त्या मुक्तिं वाञ्छति ।

**विवेकाद्वैराग्ये सति शमदमादिष्वपि ततो**
**मुमुक्षोर्जिज्ञासा त्वयि भवति रक्षोधिपरिपो।**
**जगज्जन्मस्थानप्रविलयनिदानं भवति यः**
**श्रुतीनां निर्माता श्रुतिभिरभिगम्यश्च भवति।।**[7]

ज्ञानेनैवापवर्गः प्राप्यते इति सर्वदर्शनसिद्धान्तसारोऽयं विषयः । ज्ञानप्राप्त्यर्थं शास्त्रेषु अष्टौ अन्तरङ्गसाधनानि प्रोक्तानि । यथा – (1)

विवेकः (2) वैराग्यम् (3) शमादिषट्सम्पत्तिः (शमः, दमः, श्रद्धा, उपरतिः, तितिक्षा, समाधानञ्च) (4) मुमुक्षुत्वम् (5) श्रवणम् (6) मननम् (7) निदिध्यासनम् (8) तत्त्वपदार्थसंशोधनम्। अत्र प्रथमसाधनं विवेकोऽस्ति । सत् किमसत्किमिति पृथक् पृथक् ज्ञानमेव विवेकः इति कथ्यते । एवं सदसद्विवेकेन संसारं प्रति विमुखता एव वैराग्यमित्युच्यते । वैराग्यान् शमादिषट्सम्पत्तयः प्राप्यन्ते । मनसः इन्द्रियविषयेभ्यः परावर्तनं शमः[8] इत्युच्यते । विवेकचूडामणिः इत्याख्ये ग्रन्थे श्रमता भगवत्पादेन शङ्कराचार्येणोच्यते –

**विरज्य विषयव्राताद्दोषदृष्ट्या मुहुर्मुहुः ।**
**स्वलक्ष्ये नियतावस्था मनसः शम उच्यते ।।**[9]

ततैव इन्द्रियाणां विषयेभ्यः परावर्तनं दमः[10] इति निगद्यते । तदुच्यते शङ्करेण –

**विषयेभ्यः परावर्त्य स्थापनं स्वस्वगोलके ।**
**उभयेषामिन्द्रियाणां स दमः परिकीर्तितः।।**[11]

शमदमवान् पुरुषः एव स्थितप्रज्ञः इति श्रीमद्भगवद्गीतायां श्रीकृष्णेन निगद्यते । यथा-

**यदा संहरते चायं कुर्मोऽङ्गानीव सर्वशः।**
**इन्द्रियाणीन्द्रियार्थेभ्यस्तस्य प्रज्ञा प्रतिष्ठिता।।**[12]

यदा अयं मानवः सर्वशः इन्द्रियाणि इन्द्रियार्थेभ्यः संहरते तस्य प्रज्ञा प्रतिष्ठिता भवति । इन्द्रियाणि सर्वदा शब्दादिषु विषयेषु प्रवर्तन्ते । कूर्मः यथा भीत्या स्वमुखं सङ्कुचितं कृत्वा तस्य वल्कलेषु स्थापयति, तथैव ज्ञाननिष्ठः मानवः इन्द्रियाणि क्रोडीकृत्य शब्दादिभ्यः विषयेभ्यः सङ्कुचितानि करोति ।

तृतीयं साधनं भवति श्रद्धा। केवलं श्रवणादिभिः तत्त्वसाक्षात्कारो न भवति। तत्र काऽपि श्रद्धा अपेक्षते। गुरूपदिष्टवेदान्तवाक्येषु विश्वासः श्रद्धा इति कथ्यते वेदान्तसारे। आत्मतत्त्वजिज्ञासा श्रद्धायाः मेरुदण्डवद्भवति। श्रीमद्भगवद्गीतायां भगवता उच्यते – श्रद्धावांल्लभते ज्ञानम् इति । भगवता शङ्कराचार्येण विवेकचूडामणौ लिख्यते –

**शास्त्रस्य गुरुवाक्यस्य सत्यबुद्ध्यवधारणम् ।**
**सा श्रद्धा कथिता सद्भिर्यया वस्तूपलभ्यते ।।**

चतुर्थसाधनसम्पत्तिर्भवति उपरतिः। वेदान्तसारे उपरतेः लक्षण-मुच्यते – निवर्तितानाम् एतेषां तद्व्यतिरिक्तविषयेभ्यः उपरमण-मुपरतिः। अथवा विहितानां कर्मणां विधिना परित्यागः। मनसः तथा बाह्येन्द्रियाणां निग्रहादेव तत्त्वज्ञानस्य मार्ग उन्मुक्तो न भवति। पूर्वतनवासनाभिः तानि इन्द्रियाणि मनश्च पुनः चञ्चलं भवति। अतः इन्द्रियाणि मनश्च श्रवणादिसाधनैः पृथग्भूतेषु शब्दादिविषयेषु प्रवर्तन्ते। तदा यया प्रवृत्त्या सर्वविषयनिग्रहः क्रियते सा भवति उपरतिः ।

ततः तितिक्षा । तितिक्षा नाम शीतोष्णादिद्वन्द्वसहिष्णुता । सर्वेऽपि जीवाः सुखम् आनन्दश्च अनुभवन्ति । आनन्दात् प्रमादः न जायते। किन्तु दुःखं षोढुं सर्वे न शक्नुवन्ति । तेन दुःखेन च नैके प्रमादग्रस्ताः जायन्ते । परन्तु तितिक्षाभ्यासेन समीपवर्तिसुखदुःखे समाने प्रतीयेते प्रमादं च न जनयतः । सुखेन न अत्यधिक आनन्दोऽनुभूयते न च दुःखेन मानवः दुःखी भवति । अतः सः अप्रमादी धैर्यवान् साधनायाः अविचलितः न भवति । विवेकचूडामणौ उच्यते –

**सहनं सर्वदुःखानामप्रतीकारपूर्वकम् ।**
**चिन्ताविलापरहितं सा तितिक्षा निगद्यते ।।** इति ।

गीतायां श्रीकृष्णेन एतादृशः तितिक्षाव्रती स्थितधीः मुनिः इति उच्यते । तद्धि –

**दुःखेष्वनुद्विग्नमनाः सुखेषु विगतस्पृहः ।**
**वीतरागभयक्रोधस्थितधीर्मुनिरूच्यते ।।**

वस्तुतः शमदमोपरतिभिः बाह्यवस्तुभ्यः निवृत्तिः जायते । किन्तु तितिक्षाद्वारा अन्तर्वस्तुभ्यः चित्तनिवृत्तिः सम्भवति ।

अन्तिमः साधनसम्पत्तिर्भवति समाधानम् । निगृहीतस्य मनसः श्रवणादौ तद्गुणविषये च समाधिः समाधानम् । विषयेभ्यः प्रत्याहितस्य चित्तस्य आत्मनि श्रवण-मनन-निदिध्यासनद्वारा गुरुशुश्रूषादिभिः अवस्थानं समाधानमित्युच्यते । अस्यां दशायां तथा किमपि न क्रियते येन आत्मविषयस्मृतिधारा विच्छिन्ना स्यात् । विवेकचूडामणौ उच्यते –

**सम्यगवस्थानं बुद्धेः शुद्धेः ब्रह्मणि सर्वथा ।**
**तत्समाधानमित्युक्तं न तु चित्तस्य लाललम् ।। इति ।**

एवं ज्ञानप्राप्तेः तृतीयं साधनं शम-दमादिषट्ककं प्रोच्यते। ततः चतुर्थं साधनं भवति मुमुक्षुता। संसारान्मुक्तीच्छैव मुमुक्षुता। विवेकचूडामणौ उच्यते –

**अहङ्कारादिदेहान्तान् बन्धानज्ञानकल्पितान्।**
**स्वस्वरूपावबोधेन मोक्तुमिच्छा मुमुक्षुता।।**

उपदेशसाहस्र्यामुच्यते –

**प्रशान्तचित्ताय जितेन्द्रियाय च**
**प्रहीणदोषाय यथोक्तकारिणे ।**
**गुणान्विताय अनुगताय सर्वदा**
**प्रदेयमेतत्सततं मुमुक्षवे ।।**[13]

यदा मुमुक्षुताभावना जागर्ति, तदा साधकः सर्वं त्यक्त्वा श्रोत्रियस्य ब्रह्मनिष्ठस्य गुरोः समीपे गच्छति । तत्समीपे स्थित्वा शास्त्राणि श्रुत्वा तात्पर्यनिर्णयं विधाय तद्धारयति। तदेव श्रवणमित्युच्यते। श्रवणात् प्रमाणगतसंशयः दूरीभवति। परमात्मतत्त्वं युक्त्या चिन्तयति । तदेव मननमित्युच्यते। मननात्प्रमेयगतसंशयो

नश्यति। संसारसत्तामङ्गीकृत्य परमात्मतत्त्वानङ्गीकारे सति सा विपरीतभावना इत्युच्यते । विपरीतभावनायाः तस्याः निराकरणं येन क्रियते तन्निदिध्यासनमुच्यते । सर्वेभ्यः वस्तुभ्यः सम्बन्धविच्छेदे सति केवलं चिन्मयतत्त्वे संलग्नता तत्त्वसंशोधनं भवति। तदेव तत्त्वसाक्षात्कारः अपवर्गः इति वक्तुं शक्यते।

श्रीरामभद्रः कविः श्रीरामचन्द्रस्य प्रसादाय श्रीरामप्रसादस्तवः इति स्तोत्रकाव्ये एतेषां सर्वेषामपि मुक्तिसाधनानां ज्ञानोदयसाधना-नामुल्लेखनं विधाय तेषां सर्वेषां मूले ब्रह्माणं ब्रह्मस्वरूपं श्रीरामचन्द्रमेव उपस्थापयति। उपनिषत्सु ब्रह्मसूत्रे यत्प्रथमं सूत्रमस्ति तत्सारं स्वीकृत्यैव तेन उच्यते – मुमुक्षोर्जिज्ञासा त्वयि भवति रक्षोधिपरिपो। हे राक्षसराजरावणस्य शत्रो श्रीरामचन्द्र मुमुक्षुः मानवः त्वं ब्रह्माणमेव ज्ञातुम् इच्छति। यथा त्वं राक्षसाधिपस्य विनाशं कृत्वा जगद्रक्षितवान्, तथैव मानवानामन्तर्निहितदुर्गुणान् विनश्य मुक्तिं प्रदेहि ।

**सहायकग्रन्थसूची**


1) रामभद्रसाहस्रमञ्जरी, वी.स्वामिनाथाचार्यः, श्रीमहाप्रियावल ट्रष्ट, गुरुकृपा – 94, आइ.टि.आइ. ले आउट्, बाङ्गालोर्, 560 054।

2) विशिष्टाद्वैतवेदान्त में प्रमेय मींमासा (शोधप्रबन्धः), श्याम सुन्दर तिवारी (अनुसन्धाता), संस्कृतविभाग, इलाहाबाद विश्वविद्यालय, 2054 वैक्रमीय संवत् ।

3) न्यायसूत्रम् (महामुनिगौतमकृतम्), विश्वनाथतर्कपञ्चाननकृतवृत्ति-समेतम्, पं.सुख- दयालकृतहिन्दीव्याख्यासमेतम्, पञ्जावविश्व-विद्यालयः, पंजाव, 1883 ।

4) सर्वदर्शनसंग्रहः (श्रीमाधवाचार्यविरचितः), खेमराजश्रीकृष्णदास-श्रेष्ठिना मुम्बय्यां स्वकीये श्रीवेङ्कटेश्वर स्टीम्-यन्त्रालये मुद्रयित्वा प्रकाशितः । 1827 शकम्, 1962 माघंवत् ।

5) सांख्यसूत्रम् (महर्षिकपिलप्रणीतम्), अनिरुद्धवृत्तिसहितम्, श्रीकुञ्जविहारितर्क-सिद्धान्तेन स्वप्रणीतया तत्त्वबोधिनीसमाख्य-टीकया बङ्गानुवादेन च समलङ्कृत्य प्रकाशितम्। मानभूम, पो.वेडोवेलतोरा, कोलकाता। श्रीकुलचन्द्रदेद्वारा मुद्रितम्। बङ्गाब्दः - 1925 ।


**सन्दर्भ :-**

[1] रा.क.र.स्त. – ३/७

[2] व.मा.स्तो. – श्लो.३९

[3] रामाष्टप्रासस्तवः – श्लो. ६७

[4] रा.क.र.स्त. – १/४६

[5] व.मा.स्तो. – श्लो.२५

[6] वा.रामा. – ६/१८/३३

[7] रा.प्र.स्त. – श्लो.४९

[8] शमस्तावत् श्रवणादिव्यतिरिक्तविषयेभ्यः मनसः निग्रहः ।

[9] वि.चू. – श्लो.२२

[10] दमो बाह्येन्द्रियाणां तद्व्यतिरिक्तविषयेभ्यो निवर्तनम् ।

[11] वि.चू. – श्लो.२३

[12] श्री.भ.गी. – श्लो.२/५८

[13] उ.सा. – ३२४, १६/१२




National Journal of Hindi & Sanskrit Research

ISSN: 2454-9177
NJHSR 2024; 1(52): 95-98

www.sanskritarticle.com

**हर्ष कुमार त्रिपाठी**
सहायक आचार्य (संस्कृत विभाग)
श्री ब्रजेन्द्र जनता महाविद्यालय बिसावर-हाथरस, उ०प्र० २८१३०२

**Correspondence:**
**हर्ष कुमार त्रिपाठी**
सहायक आचार्य (संस्कृत विभाग)
श्री ब्रजेन्द्र जनता महाविद्यालय बिसावर-हाथरस, उ०प्र० २८१३०२

# बौद्ध-संप्रदाय के दार्शनिक विकास का समीक्षात्मक अध्ययन

**हर्ष कुमार त्रिपाठी**

भारत-देश विचारों के प्रस्फुटन और वैचारिक गतिशीलता के प्रतिमानों के आलोक में उच्चतम स्थान रखता है। भारतीय मेधा आदिम-युग से ही वैचारिक-उर्वरता से समृद्ध रही है तथा इस उर्वरताशाली वैचारिक भूमि पर अंकुरित अनेकों ऋषिरूपी वृक्षों से सदियों तक सम्पूर्ण विश्व ने ज्ञानराशि रूपी फल से अपनी क्षुधा की पूर्ति की है। भारतीय-ज्ञान परम्परा को पंडित भागवतशास्त्री के कथन से कहीं अधिक ठीक ढंग से समझा जा सकता है। उनका कथन है- **'भारतीय ज्ञान परम्परा सनातन गङ्गा-प्रवाह है!'** गङ्गा-प्रवाह रूपी उपया अन्वर्थ ही है, क्योंकि इस परम्परा ने मानव-जाति के इतिहास को ज्ञान प्रदान करके शीतलता देने जो कार्य किया है, वह गङ्गा के तुल्य ही है। यहां आत्मविषयक-चिन्तन को अत्यधिक महत्वपूर्ण स्थान प्रदान किया गया है। इसकी गम्भीरता इसी से परिलक्षित होती है कि बहुत सारी दर्शन की धाराएं इस संस्कृति के बौद्धिक-इतिहास में दृष्टिगोचर होती हैं। माधवाचार्य ने **'सर्वदर्शनसंग्रह'** नामक अपने ग्रन्थ में चार्वाक-दर्शन से प्रारम्भ कर अद्वैत-वेदान्त दर्शन तक 16 दर्शनों का ग्रहण करके उनके सिद्धान्तों की व्याख्या की है।[1] उन्हीं में से एक दर्शन बौद्ध-दर्शन भी है, तथा इसके प्रवर्तक के रूप में महात्मा बुद्ध को स्वीकार किया जाता है। महात्मा बुद्ध एक व्यावहारिक धर्म सुधारक थे। उन्होंने भोग-विलास और शारीरिक पीड़ा इन दोनों को ही चरम सीमा को वस्तुएं कहकर उसकी निन्दा की और मध्य मार्ग का अनुसरण करने पर जोर दिया। बौद्ध धर्म का विशद ज्ञान त्रिपिटकों से ही प्राप्त होता है। जो कि अधोलिखित हैं-

१. **सुत्त-पिटक** - सुत्त-पिटक में तथागत के ऐसे उपदेश संगृहीत हैं, जो सर्वसाधारण के लिए बोधगम्य हैं।
२. **विनय-पिटक** - इसमें बौद्ध भिक्षु और भिक्षुणियों के जीवन के आचार-विषयक नियम हैं।
३. **अभिधम्म-पिटक** - इसमें बौद्ध धर्म के दार्शनिक सिद्धान्तों का उपदेश किया गया है।

इसके अतिरिक्त तीन प्रकार के तानों की भी चर्चा दृष्टिगोचर होती है:- **१. श्रावक-यान, २. प्रत्येकबुद्धयान, ३. बोधिसत्वयान**[2]

बौद्ध धर्म का मूलाधार चार आर्य सत्य हैं। बौद्ध धर्म के सारे सिद्धान्तों तथा बाद में विकसित विभिन्न दार्शनिक-मतवादों के आधार चार आर्य सत्य ही है। ये अधोलिखित हैं -

1. **दुख**

2. **दुख समुदाय**

दुख के अनेक कारण है। सभी कारणों का मूल तृष्णा है।

3. **दुख निरोध**

दुख निवारण के लिए तृष्णा (अज्ञान) का उन्मूलन आवश्यक है। दुख निरोध को ही निर्वाण कहा जाता है।

4. **दुखनिरोधगामिनी प्रतिपदा**

इसके द्वारा दुख निदान के उपायों का उपदेश भगवान बुद्ध ने किया है। इसे अष्टांगिक-मार्ग भी कहते हैं, इन 8 मार्गों को तीन स्कन्धों से बांटा गया है। यह वर्गीकरण अधोलिखित है-

| प्रज्ञा | शील | समाधि |
|---|---|---|
| सम्यक दृष्टि | सम्यक कर्मान्त | सम्यक व्यायाम |
| सम्यक संकल्प | सम्यक आजीव | सम्यक स्मृति |
| सम्यक वाणी | | सम्यक समाधि |

बौद्ध धर्म के त्रिरत्नों बुद्ध, धम्म एवं संघ में संघ का स्थान महत्वपूर्ण था । सारनाथ में मृगदाव में धर्म का उपदेश देने के बाद अपने प्रथम 5 शिष्यों के साथ बुद्ध ने संघ की स्थापना की। तत्पश्चात् यश नामक धनी व्यापारी के साथ अन्य वैश्यों को भी संघ का सदस्य बनाया। बौद्ध-संघ से पहले ही आजीवक तथा जैन-संघ विद्यमान थे । बुद्ध ने किसी को अपना उत्तराधिकारी मनोनीत नहीं किया। उन्होंने कहा कि धर्म एवं संघ के निर्धारित नियम ही उनके उत्तराधिकारी हैं।

बौद्धों के दार्शनिक विकास को समझने में चारों संगीतियों का अत्यधिक महत्वपूर्ण स्थान है, चारों संगीतियां बौद्धों के विकास की आरंभिक अवस्थाओं की मूल रही हैं।

**प्रथम बौद्ध संगीति**

प्रथम बौद्ध संगीति बुद्ध की मृत्यु के तत्काल बाद लगभग 483 ई पू में राजगृह की सप्तपर्णि गुफा में हुई। इस समय मगध का शासक अजातशत्रु था। इस संगीति की अध्यक्षता महाकस्सप ने की तथा इसमें बुद्ध के प्रमुख शिष्य आनन्द और उपालि भी उपस्थित थे। इस संगीति में बुद्ध की शिक्षाओं का संकलन हुआ तथा उन्हें सुत्त एवं विनय नाम के दो पिटको में विभाजित किया गया । सुत्तपिटक में धर्म के सिद्धांत एवं विनय पिटक में आचार के नियम थे। आनन्द ने सुत्तपिटक का तथा उपालि ने विनय पिटक का पाठ किया। उपालि के विषय में बुद्ध ने कहा था कि **'भिक्षुओं! मेरे विनय धारण करने वाले श्रावकों में यह उपालि अग्र है'**[3] प्रथम बौद्ध संगीति को पंचशतिका भी कहते हैं ।

**द्वितीय बौद्ध संगीति**

द्वितीय बौद्ध संगीति का आयोजन बुद्ध की मृत्यु के लगभग 100 वर्ष पश्चात् 383 ई पू मे वैशाली में हुआ। इस समय मगध का शासक कालाशोक था । द्वितीय बौद्ध संगीति की अध्यक्षता सावकमीर तथा स्थविरयश ने की। वैशाली के भिक्षुओं ने विनय-पिटक के नियमों के विपरीत-सिद्धांतों को अपना लिया था, जिन्हें अवंति आदि पश्चिमी स्थानों के भिक्षु पसंद नहीं करते थे । पूर्वी और पश्चिमी भिक्षुओं के बीच इसी कारण मतभेद उत्पन्न हो गया। इसी मतभेद को सुलझाने हेतु इस सभा का आयोजन किया गया। पूर्वी गुट में मगध तथा वैशाली के भिक्षु थे और पश्चिमी गुट में अवंति, कौशाम्बी तथा पाठण के भिक्षु थे । पूर्वी गुट परिवर्तन नियमों का पक्षधर था तथा वज्जीपुत्रक कहलाता था। इस गुट ने महासांघिक या आचार्यवाद गुट का निर्माण किया। महासांघिक सम्प्रदाय का नेतृत्व महाकस्सप ने किया। पश्चिमी-संघ परिवर्तन विरोधी था। इस समवाय ने स्थविरवाद (थेरवाद) का निर्माण किया। थेरवाद का नेतृत्व महाकाच्चायन ने किया। बाद में थेरवाद 11 पंथों में और महासांघिक 7 पंथों में विभक्त हो गया।[4]

**तृतीय बौद्ध संगीति**

तृतीय संगीति तक थेरवाद सर्वमान्य सिद्धांत रहा। इस संगीति की अध्यक्षता मोग्गलिपुत्र तिस्स ने की तथा इसका आयोजन अशोक के शासनकाल में हुआ । इस संगीति के बाद से ही प्रचारकों को बौद्ध धर्म के प्रचार के लिए बाहर भेजने का कार्य प्रारंभ हुआ । थेरवाद को अशोक ने अपनाया, अतः इसे व्यापक राज्यश्रय मिला और इसे फैलने और फूलने का अवसर भी मिला।

**चतुर्थ बौद्ध संगीति**

यह संगीति प्रथम शताब्दी में कश्मीर में कनिष्क के शासनकाल में हुई जिसकी अध्यक्षता वसुमित्र ने की। इस संगीति में थेरवाद के स्थान पर सर्वास्तिवाद का प्रचलन प्रारंभ हुआ, अतः वैभाषिक मत देशव्यापी होता गया। कनिष्क ने सर्वास्तिवाद को अपनाया और प्रचारकों को प्रचार के लिए भेजा। बाद में पंचम शताब्दी में वसुबंधु और स्थूलभद्र जैसे विद्वानों ने भी वैभाषिक मत के ग्रंथों की रचना की। इसी शताब्दी में महायान और हीनयान के रूप में बौद्ध धर्म का विभाजन हो जाता है। सर्वास्तिवाद का व्यापक प्रचलन तृतीय शताब्दी तक रहा, जब तक कि नागार्जुन और कुमारपालित का अभ्युदय नहीं हुआ।प्रसंगवश स्थविरवाद और सर्वास्तित्ववाद का संक्षिप्त विवेचन किया जा रहा है-

**स्थविरवादी सम्प्रदायs**

बौद्ध सम्प्रदायों में यह सर्वाधिक प्राचीन था । इस सम्प्रदाय का संस्थापक महाकच्चायन को माना जाता है। काश्मीर इस सम्प्रदाय का प्रमुख केन्द्र था। उस सम्प्रदाय का मानना था कि बुद्धत्व की प्राप्ति सब को नहीं हो सकती। अतः कुछ को ही निर्वाण का पात्र समझा गया।

**सर्वास्तित्ववादी सम्प्रदाय**

इस सम्प्रदाय की स्थापना राहलभद्र नामक भिक्षु ने की थी। प्रारम्भ में इस सम्प्रदाय का प्रमुख केन्द्र मथुरा था। वहां से यह गंधार तथा काश्मीर पहुंचा। स्थविरवादी सम्प्रदाय से यह इस बात में भिन्न था कि, इसका मानना था कि दृश्य जगत के धर्म पूर्णतः क्षणिक नहीं है बल्कि सदैव अन्तर्हित रूप से विद्यमान रहते हैं। सर्वास्तिवादी सम्प्रदाय के प्रमुख आचार्य थे- घोजक, बुद्धदेव, धर्मत्रात और वसुमित्र। वसुबन्धु ने सर्वास्तित्ववादी दर्शन की व्याख्या की और अभिधम्मकोष की रचना की। सर्वास्तित्ववादी सम्प्रदाय का सर्वाधिक उत्थान कनिष्क के समय में हुआ ।

बौद्धों में चारों प्रकार का श्रेणी-विभाग सत्ता विषयक महत्वपूर्ण प्रश्न को लेकर ही किया गया है, सत्ता की मीमांसा करने वाले दर्शन चार ही हो सकते हैं अतः उसी प्रकार का श्रेणी विभाग हमें देखने को

मिलता है। इन चारों संप्रदायों में वैभाषिक तथा सौत्रान्तिक का संबंध हीनयान से है तथा योगाचार और माध्यमिक का संबंध महायान से है। यहां हीन शब्द का अर्थ अल्प ग्रहणीय है न कि तुच्छ, नीच या अधम।[5]

**वैभाषिक सम्प्रदाय**

कालांतर में सर्वास्तित्ववादी सम्प्रदाय को वैभाषिक कहा जाने लगा, क्योंकि यह सम्प्रदाय विभाषाशास्त्र पर आधारित था। इस सम्प्रदाय के अनुसार वस्तुओं का ज्ञान केवल प्रत्यक्ष से ही संभव है। तात्पर्य यह है कि जिस जगत का अनुभव हमें अपनी इंद्रियों के द्वारा हो रहा है उसकी बाह्य सत्ता अवश्यमेव है, हमारे भीतर चित्त की भी सत्ता स्वतंत्र रूप से है। बाहरी पदार्थों की सत्ता चित्तनिरपेक्ष है, अर्थात हम अपनी इंद्रियों की सहायता से बाहरी पदार्थों की सत्या प्रत्यक्ष रूप से मानते हैं। अतः इस मत को 'वाह्यप्रत्यक्षवाद'[6] भी कहा जाता है। इनके मतानुसार प्रत्येक वस्तुओं का निर्माण परमाणुओं से हुआ है।

वैभाषिक संप्रदाय का सर्वमान्य ग्रंथ 'अभिधर्मज्ञानप्रस्थानशास्त्र' है जिसका कात्यायनीपुत्र ने बुद्ध के निर्वाण के 300 वर्ष बाद लेखन किया था। इस ग्रंथ में 8 परिच्छेद, 44 वर्ग तथा 15000 श्लोक थे। यह अब सिर्फ चीनी भाषा के अनुवाद में उपलब्ध है, मूल संस्कृत में उपलब्ध नहीं है। चतुर्थ संगीति में अभिधर्मविभाषाशास्त्र नाम से एक भाष्य ग्रंथ की रचना की गई, यह भी मूल संस्कृत में नहीं प्राप्त है, अपितु तिब्बती और चीनी अनुवाद ही प्राप्त है।[7] इस संप्रदाय के प्रमुख ग्रंथ के रूप में वसुबंधु का अभिधर्मकोश अत्यंत आदरणीय है तथा प्रामाणिक माना जाता है। ऐसा माना जाता है कि वसुबंधु पहले वैभाषिक थे परंतु बाद में विज्ञानवादी हो गए । संघभद्र नामक आचार्य ने कोशकरिका नामक ग्रंथ का निर्माण किया जो वैभाषिक सिद्धांतों का सार ग्रंथ है। इस परंपरा में समयप्रदीपिका नामक ग्रंथ उपलब्ध होता है जिसमें 10000 श्लोक हैं।

वैभाषिक के सिद्धांतों के रूप में पंचस्कंध द्वादश-आयतन और अष्टादश धातु के सिद्धांतों को गिना जाता है।

**सौत्रान्तिक सम्प्रदाय**

इस मत का मुख्य आधार सूत्र (सुत्त) पिटक है। अतः इसे सौत्रान्तिक कहा जाता है। सौत्रान्तिक चित्त तथा वाह्य जगत दोनों की सत्ता में विश्वास करते है किंतु वे यह नहीं मानते कि वस्तुओं का ज्ञान प्रत्यक्ष रूप से होता है। इनके अनुसार, वाह्य जगत संबंधी हमारा ज्ञान एक संभव अनुमान मात्र है।[8] तात्पर्य यह है कि जब समग्र पदार्थ क्षणिक हैं, तब किसी भी वस्तु का प्रत्यक्ष ज्ञान संभव नहीं है। जिस क्षण में किसी भी पदार्थ का हमारी इंद्रियों के साथ संपर्क होता है वह पदार्थ प्रथम क्षण में ही उत्पन्न होकर विनष्ट हो चुका होता है, केवल उससे उत्पन्न संवेदन शेष रहता है । चित्त को इसी का ज्ञान होता है और इनके द्वारा वह इनके उत्पादक बाहरी पदार्थों की सत्ता का अनुमान करता है। फलतः बाहरी पदार्थों की सत्ता प्रत्यक्ष से सिद्ध ना होकर अनुमान के द्वारा सिद्ध होती है। इस मत में चित्त के आकारों के द्वारा ही वाह्य पदार्थों का अनुमान होता है। उनकी चित्त निरपेक्षता नहीं है। अतः पूर्वोक्त वैभाषिक तथा सौत्रान्तिक दोनों ही सर्वास्तिवादी सिद्धांत हैं। अंतर इतना है कि वैभाषिक मत में वाह्यसत्ता चित्तनिरपेक्ष है और सौत्रान्तिक मत में वाह्यसत्ता चित्तसापेक्ष है।

इस मत के आचार्य अभिधर्म को बुद्ध के द्वारा रचित ना होने के कारण प्रामाणिक नहीं मानते हैं अपितु तथागत के आध्यात्मिक उपदेश सुत्तपिटक के ही कतिपय सूत्रों में निवेशित हैं, अतः बुद्ध की वास्तविक शिक्षाओं के भंडार होने के कारण सुत्तपिटक ही नितांत प्रामाणिक हैं। इनकी उत्पत्ति वैभाषिक के अनन्तर हुई प्रतीत होती है। इस सम्प्रदाय के प्रमुख चार आचार्यों का उल्लेख मिलता है - कुमारलात, श्रीलात, धर्मत्रात और बुद्धदेव।

आचार्य कुमारलात को इस सिद्धांत का संस्थापक माना जाता है। इनका समय द्वितीय शताब्दी का उत्तरार्ध तथा तृतीय शताब्दी का पूर्वार्ध माना जाता है, अतः यह नागार्जुन के समकालीन थे। 'कल्पनामण्डितिका' नाम की रचना इनकी प्राप्त होती है। श्रीलात कुमारलात के शिष्य थे, इन्होंने विभाषाशास्त्र नामक ग्रंथ की रचना की जो दुर्भाग्यवश प्राप्त नहीं है।

सौत्रान्तिक काल के विषय में वर्तमान काल की सत्यता तो मानते हैं, परंतु भूत एवं भविष्य काल की सत्ता काल्पनिक तथा निराधार स्वीकार करते हैं। वहीं वैभाषिक तीनों कालों के अस्तित्व को स्वीकार करते हैं इसलिए उन्हें प्रथमतया सर्वास्तिवादी कहा जाता है। इनके यहां परमाणु स्वयं निरवयव होता है स्पर्श अवयवों का ना होकर समस्त वस्तु का ही होता है, ऐसी धारणा है।

**योगाचार संप्रदाय**

योगाचार संप्रदाय में विज्ञान की सर्वोच्च सत्ता स्वीकार की जाती है। इस दर्शन को विज्ञानवादी नाम से भी जाना जाता है। यह संप्रदाय बाह्यसत्ता को किसी भी प्रकार से नहीं मानता। यहां पर तर्क दिया जाता है कि चित्त में समय-समय पर उत्पन्न होने वाले आकारों के द्वारा ज्ञान कैसे हो सकता है, अतः ज्ञान की सत्ता मानना ही सबसे उत्तम विचार है। विज्ञान ही एकमात्र परमार्थ है, विज्ञान के ही सारे पर्याय हैं, चाहे वह चित्त हो, मन हो या विज्ञप्ति हो। एक ही वस्तु विभिन्न-नामों के द्वारा अपनी क्रिया के भेद के कारण भिन्न-भिन्न शब्दों से पुकारी जाती है। चेतन क्रिया से संबंध होने के कारण वह चित्त कहलाता है, मनन क्रिया से मन तथा विषयों के ग्रहण करने में कारण होने से उसी को विज्ञान कहा जाता है । विज्ञान के दो प्रकार इस दर्शन में बताए गए हैं- आलयविज्ञान और प्रवृत्तिविज्ञान।

इस संप्रदाय के प्रवर्तक के रूप में आचार्य मैत्रेयनाथ को माना जाता है। इनके सुप्रसिद्ध ग्रंथ हैं- 'मध्यान्तविभाग' या 'मध्यान्तविभागसूत्र', जिसमें कारिका भाग मैत्रेय का है तथा गद्यांश असंग का है। इनके अन्य भी ग्रंथ हैं- 'अभिसमयालंकार, सूत्रालंकार, महायान-उत्तरतंत्र, धर्मधर्मताविभंग'। असंग मैत्रेय के शिष्य थे, इन्हें समुद्रगुप्त के समकालीन माना जाता है। इन्होंने 'महायानसंपरिग्रह, महायानाभिधर्मसंगीतिशास्त्र, योगाचारभूमिशास्त्र अभिसमया-लंकारटीका' आदि ग्रंथ लिखे हैं। आचार्य स्थिरमति ने 'त्रिंशिकाभाष्य, अभिधर्मकोशभाष्यवृत्ति, सूत्रालंकारवृत्तिभाष्य' आदि ग्रंथ लिखे हैं।

**माध्यमिक संप्रदाय**

माध्यमिक बौद्ध न तो बाह्य अर्थ को मानते हैं और ना ही विज्ञान को मानते हैं, उनकी दृष्टि में शून्य ही परमार्थ सत्य है। यह शून्य कोई अभाववादी शब्द नहीं है, प्रत्युत यह अनिर्वचनीय तत्व का द्योतक है। जो ना सत् है, ना असत् है, ना सदसत् है, ना ही इन दोनों से भिन्न है। इन चारों कोटियों से भिन्न और विनिर्मुक्त तथा विलक्षण होने के कारण यह परमार्थ 'शून्य' नाम से अभिहित किया जाता है-

**"न सन् नासन् न सदसत् न चाप्यनुभयात्मकम्।**
**चतुष्कोटिर्विनिर्मुक्त तेत्वं माध्यमिका विदुः।"**

इस प्रत्यक्ष जगत से परे परमार्थिक सत्ता विद्यमान है, लेकिन वह अवर्णनीय है, उसके विषय में कुछ भी नहीं कहा जा सकता है कि वह तत्व मानसिक है अथवा वाह्य। लौकिक विचारों से वर्णनीय ना होने के कारण ही उसे शून्य कहा गया है। शून्य का प्रयोग एक विशेष सिद्धांत का सूचक है। चंद्रकीर्ति ने इसके लिए लिखा है कि **'शून्य ही मध्यम मार्ग का अपर नाम है।'** उनके अनुसार शून्य का ही संपूर्ण यह नाना प्रपंच विवर्त है, अतः शून्य ही सत्य है।

नागार्जुन को शून्यवाद या माध्यमिक सिद्धांत के प्रवर्तक के रूप में स्वीकार किया जाता है, यह श्री पर्वत पर रहते थे। इनकी रचना माध्यमिककारिका है, जो 27 प्रकरणों में विभक्त है। शून्यवाद की प्रतिष्ठा इसी ग्रंथ पर है। इhस ग्रंथ पर आचार्य भव्य ने प्रज्ञाप्रदीप और चंद्रकीर्ति ने प्रसन्नपदा नामक वृत्तियां लिखी हैं। नागार्जुन के अन्य ग्रंथ- प्रज्ञापारमिताशास्त्र तथा दशभूमिविभाषाशास्त्र हैं। आचार्य आर्यदेव ने चतुःशतक नामक एक ग्रंथ लिखा, जिसमें 400 कारिकाएं तथा 16 अध्याय हैं। बुद्धपालित नामक आचार्य ने माध्यमिककारिका के ऊपर एक वृत्ति लिखी है। भावविवेक नामक आचार्य ने प्रज्ञाप्रदीप, मध्यमहृदयकारिका, मध्यमार्थसंग्रह, हस्तरत्न नामक ग्रंथ लिखे हैं। चंद्रकीर्ति ने माध्यमिकावतार, प्रसन्नपदा, चतुःशतकवृत्ति नामक ग्रंथ लिखे हैं। शांतरक्षित ने वादन्याय पर एक विस्तृत टीका लिखी है, परंतु इनका मौलिक विपुलकाय ग्रंथ तत्वसंग्रह है, जिसके कारण इनकी ख्याति अत्यधिक है।

ध्यान देने योग्य बात यह है कि शून्यवाद का उदय नागार्जुन ने किया और विज्ञानवाद का उदय मैत्रेयनाथ ने किया, ऐसी बात नहीं है। प्राचीन ग्रंथों में इन सिद्धांतों का उत्स देखा जा सकता है. इन दोनों ने माध्यमिककारिका के ऊपर एक वृत्ति लिखी है। भावविवेक नामक आचार्य ने प्रज्ञाप्रदीप, मध्यमहृदयकारिका, मध्यमार्थसंग्रह, हस्तरत्न नामक ग्रंथ लिखे हैं। चंद्रकीर्ति ने माध्यमिकावतार, प्रसन्नपदा चतुःशतकवृत्ति नामक ग्रंथ लिखे हैं । शांतरक्षित ने वादन्याय पर एक विस्तृत टीका लिखी है, परंतु इनका मौलिक विपुलकाय ग्रंथ तत्वसंग्रह है, जिसके कारण इनकी ख्याति अत्यधिक है।

**वज्रयान संप्रदाय**

इन चारों संप्रदायों के अतिरिक्त आठवीं शताब्दी से 12वीं शताब्दी तक हमें वज्रयान का स्वरूप देखने को मिलता है, जो शून्यवाद और विज्ञानवाद के परस्पर सहयोग से उत्पन्न हुआ प्रतीत होता है। आठवीं शताब्दी तक नालंदा बौद्ध धर्म और दर्शन का केंद्र बन गया था जिस कारण वज्रयान का विकास इसी क्षेत्र के आसपास प्रारंभ में दिखाई देता है और इन्हीं 400 वर्षों में वज्रयान के प्रसिद्ध 84 सिद्धों का आविर्भाव भी होता है।

ध्यान देने योग्य बात यह है कि शून्यवाद का उदय नागार्जुन ने किया और विज्ञानवाद का उदय मैत्रेयनाथ ने किया, ऐसी बात नहीं है। प्राचीन ग्रंथों में इन सिद्धांतों का उत्स देखा जा सकता है, इन दोनों ही आचार्यों ने इन सिद्धांतों को युक्तियों के सहारे प्रमाणित किया और पहचान दिलाने में महत्वपूर्ण भूमिका निभाई इसलिए इन्हें इस मतों का प्रवर्तक कहा जाता है। बौद्ध दर्शन के विकसित और अत्यंत प्रभावशाली सिद्धांतों के प्रणयन का श्रेय सभी बौद्ध धाराओं को जाता है, जिनके समेकित प्रयास ने बौद्ध दर्शन को इतना महत्वपूर्ण स्थान दिलाने में महती भूमिका का निर्वाह किया।

**पादटिप्पणी: -**

1. माधवाचार्यकृत सर्वदर्शनसंग्रह
2. स्कृत वाङ्मय का बृहद् इतिहास, द्वादश खण्ड, पृष्ठ-२४५
3. गुत्तरनिकाय १.२.१-७
4. चीन भारतीय इतिहास एवं संस्कृति(के सी श्रीवास्तव), बौद्ध-दर्शन खण्ड
5. स्कृत वाङ्मय का बृहद् इतिहास, द्वादश खण्ड, पृष्ठ-२४८
6. माधवाचार्यकृत सर्वदर्शनसंग्रह, बौद्ध-खण्ड, पृष्ठ-
7. पालि साहित्य का इतिहास, पृष्ठ- १५०
8. माधवाचार्यकृत सर्वदर्शनसंग्रह, बौद्ध-खण्ड, पृष्ठ-



National Journal of
Hindi & Sanskrit Research

ISSN: 2454-9177
NJHSR 2024; 1(52): 99-103

www.sanskritarticle.com

**सर्बजया शाश्वती**
वद्यिावारीधिः शोधच्छात्रा,
ज्योतषि-वास्तुवभिागः,
राष्ट्रयिसंस्कृतवश्विवद्यिालयः,
तरुिपतिः, आन्ध्रप्रदेशः

**Correspondence:**
**सर्बजया शाश्वती**
वद्यिावारीधिः शोधच्छात्रा,
ज्योतषि-वास्तुवभिागः,
राष्ट्रयिसंस्कृतवश्विवद्यिालयः,
तरुिपतिः, आन्ध्रप्रदेशः

# वास्तुशास्त्रे भूमिपरीक्षणम्

**सर्बजया शाश्वती**

**"वसन्ति प्राणिनो यत्र"** इति परिभाषया निवासार्थक वस् धातो: तुण् प्रत्ययेन निष्पद्यते "वास्तु" शब्द:।इह लोके ज्ञानस्य मूलं भवति अस्माकं चत्वारो ऋग्यजुर्सामाथर्व-वेदा:। एतेषां चतुर्णां वेदानां चत्वार: उपवेदा: सन्ति यथा ऋग्वेदस्य आयुर्वेद:, यजुर्वेदस्य धनुर्वेद:, सामवेदस्य गान्धर्ववेद:, अथर्ववेदस्य स्थापत्यवेद। वस्तुत: स्थापत्यस्यैवाभिप्राय: भवति निवासयोग्यस्थापना। परिभाषा रूपेण अर्थं पश्यामः चेत् यस्मिन् शास्त्रे पञ्चमहाभूतानां समन्वयः, प्राकृतिकशक्तिनां प्रबन्धनम्, आवासीय-व्यवसायिकधार्मिकक्रियाकलापानां सम्पादनाय भवननिर्माणार्थं सिद्धान्तानां विधिप्रविधिनां प्रतिपादनं क्रियते तस्य समग्रसंकलनं "वास्तुशास्त्रम् " कथ्यते। वास्तुशब्दस्य पर्यायाः गृह-भवन-प्रासाद-देवालय–क्षेत्र-नगर-पुरादयाः सन्ति। सृष्टेः निर्माणान्तरं विकासक्रमे अतिप्राचीनकालादैव भारतीय-ज्ञानपरम्परायां वास्तुशास्त्रस्य स्पष्ट-उल्लेखः दृश्यते। वास्तुशास्त्रस्य उल्लेखः पुराणादिषु-रामायणे-महाभारते च बहुत्र प्राप्यते । त्रिस्कन्धात्मकस्य ज्योतिषशास्त्रस्य संहितास्कन्धे अपि संनिविष्टः भवति वास्तुशास्त्रम्। वृद्धिक्रमेण इयं विद्याकिञ्चित् स्वरुपान्तरेणविकसिता सन् आधुनिकविज्ञाने "आर्किटेक्चर" इति नाम्ना ख्याता ।परन्तु अधुनेयं गृहनिर्माणसम्बन्धिनं सर्वानपि विषयान् संहृत्य वृद्धिपथि अग्रसरितौ अपि भारतीयवास्तुशास्त्रस्य मूलोद्देश्यं विस्मृता ।यतोहि भारतीयवास्तुशास्त्रस्य लक्ष्यं केवलं शिलापाषाण-इष्टिकादिभिः उच्चतमं गृहनिर्माणमेव नास्ति अपितु धर्मार्थकाममोक्षचतुर्विधपुरुषार्थसाधकं, इह लौकिकपारलौकिक-अभ्युदयसंसाधकं सुस्थिरं, सौन्दर्ययुक्तं स्वामिना सह सकलपरिवारस्यआयु-आरोग्य-ऐश्वर्यादिवर्धकं,सुखसमृद्धिशान्तिदायकं, वंशविस्तारकं, श्रौतस्मार्तकर्मणां फलपूर्णातायाः साधकं गृहनिर्माणमस्ति यस्मिन् नियमेन विहितमात्रायां पञ्चमहाभूतानाम् सन्निवेशः स्यादिति ।तत्र भारतीयस्थापत्यशास्त्रस्य वास्तुशास्त्रस्य वा परमुद्देश्यम् भवति यदनेन लोकहितं भवेत् । यथा विश्वकर्मा स्वयमैव भणति यत् –

**वास्तुशास्त्रं प्रवक्ष्यामि लोकानां हितकाम्यया ।**

"सर्वे भवन्तु सुखिनः" इत्यस्य सार्थकतायैः इह लोके सर्वेऽपि मानवाः सर्वदा नानाविधकर्मसु संलग्नाः।अस्मिन् संसारे कीटपतङ्गादित: समारभ्य मानवं यावत् प्रत्येकमपि जीवः प्रकृते: नियमेनाबद्ध: सन् दु:खानां शमनार्थं सुखानामवाप्त्यर्थञ्च सततं प्रयत्नशील: भवति। सुखावाप्त्यर्थस्य आधारभूतस्थानं गृहं भवति, यतोहि मनुष्य: तत्रैव दानधर्मादिपुण्यप्रदायककर्मणा सर्वविधसौख्यमुपार्जयति।एतत् गृहविषयस्य सम्यग्ज्ञानं कारयति वास्तुशास्त्रम्। साम्प्रतिके काले मानव: बहुयत्नेन स्वगृहस्य निर्माणं करोति तस्य स्वप्न: भवति यत् स: तस्मिन गृहे सुखमयं जीवनं यापयेत्।एतदर्थं अस्माकं वास्तुशास्त्रमप्यस्मान् बहूपकरोति । अत्र वास्तुशास्त्रंमनुष्यस्य धर्म-अर्थ-काम-मोक्ष-पुरुषार्थानां प्राप्तये साम्प्रितिके काले अत्यन्तोपयोगी विद्यते।यतोहि मानवः स्वजीवने प्रतिपलं वास्तु-तत्वानाम् द्वारा आवृत्तः अस्ति । गृहनिर्माणाय सर्वादौ भूमेः आवश्यकता भवति यतोहि समीचानभूमौ एव समीचीनं

गृहस्य निर्माणं भवितुं शक्यते अतः भूमेः चयनं वास्तुशास्त्रीय-सिद्धान्तेषु मुख्यत्वेन वरीवर्ति। वास्तुशास्त्रे भूचयनस्य प्राक् ग्रामदेशानुकुलत्वं विचार्यते तदनन्तरं दिशोऽनुकूलत्वं ततः परं भूमेः अनुकुलत्वं विचार्यते।[१] वास्तुशास्त्रे भूचयनस्य बहवः सिन्द्धान्ताः प्रतिपादिताः सन्ति ।यथा-

**भूचयनस्य आधारभूतसिद्धान्ताः–**

1. राश्यानुसारेण ग्रामवासविचारः
2. काकिणीविचारः ।
3. वर्णानुसारेण भूमेः शुभाशुभत्वम्।
4. अष्टदिक्प्लवानुसारेण भूचयनविचारः ।
5. पृष्ठानुरोधेन भूमेः शुभाशुभत्वविचारः ।
6. भूखण्डस्य आकारवशाद् शुभाशुभत्वम्।
7. भूमेः विस्ताराधारेण शुभाशुभत्वविचारः।
8. भू–परीक्षणम्।
9. भू–दोषाः तेषां निवारणोपायाश्च।

**1.<u>राश्यानुसारेण ग्रामवासविचारः</u>** – वास्तुशास्त्रे ग्रामस्य शुभाशुभत्वविचाराय बहवः विधयः वर्णितास्सन्ति तेषु राश्यानुसारेण कश्चनप्रमुखः विधिः विद्यते। तत्र मनुष्यस्य नामराशितः यदि ग्रामस्य राशिः 2,5,9,10,11 भवति चेत् तस्मिन् ग्रामे नगरे स्थाने वा वासः शुभप्रदः भवति ।

**यद्धं द्व्यन्कसुतेशदिङ्मितमसौ ग्रामः शुभो नामभात् ।**[२]

<u>राश्यानुसारेण ग्रामवासनिषिद्ध् स्थानानि</u> – ग्रामस्य चयनान्तरं ग्रामस्य कस्मिन् भागे वासः न भवेत् तदर्थं शास्त्रेऽस्मिन प्रतिपादितं वर्तते यत् –

**गोसिंहनक्रमिथुनं निवसेन्न मध्ये**
**ग्रामस्य पूर्व-ककुभोऽलिक्षशाङ्गनाश्च ।**
**कर्को धनुस्तुलभमेधघटाश्च तद्व-**
**द्वर्गाः स्वपन्चमपरा बलिनः स्युरैन्द्या ।।**[३]

अस्य स्पष्टीकरणं निम्नलिखितचक्राधारेण ज्ञातुं शक्यते । यथा- ग्रामस्य दिक् अनुरोधेन (कस्मिन् भागे ) अधोलिखितराशयः निषिद्धः राशयः भवन्ति -

| | | |
|---|---|---|
| **ईशानकोणे-कुम्भः** | **पूर्वदिशि -वृश्चिकः** | **आग्नेयकोणे-मीनः** |
| **उत्तरदिशि -मेषः** | **ग्रामस्य मध्ये -वृषः, मिथुनम्, सिंहः, मकरः** | **दक्षिणदिशि-कन्या** |
| **वायव्यकोणे-तुला** | **पश्चिमदिशि-धनुः** | **नैऋत्यकोणे -कर्कः** |

**2.काकिणीविचारः** – ग्रामस्य शुभाशुभत्वविचारक्रमे काकिणी-विचारः मुख्यत्वेन अत्यन्तप्रसिद्धविधिः वर्तते । अस्य विचारः एवं रीत्या क्रियते-

**स्ववर्गं द्विगुणं कृत्वा परवर्गेण योजयेत् ।**
**अष्टभिस्तु हरेद्भागं योऽधिकः स ऋणी भवेत् ।।**[४]

क्रमशः अ-क-च-ट-त-प-य-श एते अष्टवर्गाः भवन्ति । तत्र स्वकीयं वर्गं (संख्या) द्विगुणितं कृत्वा परवर्गेण योज्यते यत् फलं प्राप्तं तत्र अष्टभिः भागः दीयते चेत् यत् शेषं भवति तस्य काकिणी संज्ञा भवति । स्वनामवशाद् ग्रामनामवशाद् च काकिणी साध्यते । यस्य काकिणी अधिका भवति सः अन्यस्य कृते शुभदायकः भवति । अत्र ग्रामस्य काकिणीमानमधिकं भवितव्यम् ।

**3.वर्णानुसारेण भूमेः शुभाशुभत्वम्-**भूमेः विभागः तस्याः वर्ण-गन्ध-रसदि माध्यमेन क्रियते तस्याः फलमपि तद्नुरोधेन पृथक् पृथक् भवति यथा -

**1 ब्राह्मणीभूमिः-** ब्राह्मणीभूमिः श्वतेवर्णा, कुशयुक्ता, मधुररसवती, घृतसदृशी गन्धवती उदक्प्लवा च भवति । एतादृशी भूमिः अत्युत्तमा भवति । एषा भूमिः आध्यात्मिकजनानां , वैज्ञानिकानां बुद्धिमतां जनानां कृते च शुभप्रदा भवति।

**मधुरा दर्भसंयुक्ता घृतगन्धा च या मही ।**
**उत्तरप्रवणा ज्ञेया ब्राह्माणानां च सा शुभा।।**[५]

**2 क्षत्रियाभूमिः–** क्षत्रियाभूमिः रक्तवर्णीया, कषाया(स्वादः), रक्तसदृशी गन्धवती, पूर्वदिशि प्लवत्वं भवति। एषा भूमिः ज्ञान-बल-सम्मान-राज्यप्रदायिनी च भवति। एतादृशी भूमिः मन्त्रीणां, राज्याधिकारीनां, सेना-पुलिस-प्रशासनिक जनानां कृते शुभप्रदा भवति। यथा -

**रक्तगन्धा कषाया च शरवीरेण संयुता ।**
**रक्ता प्राक्प्रवणा ज्ञेया क्षत्रियाणां च सा मही ।।**[६]

**3.वैश्यभूमिः–** वैश्यभूमिः पीतवर्णा, अन्नसदृशीगन्धवती, दूर्वायुक्ता, दक्षिणप्लवना भवति। एषा भूमिः कृषिकार्यार्थं व्यावसायिक-कार्याणाञ्च कृते शुभदा भवति ।

**दक्षिणप्रवणा भूमिर्याऽम्ला दूर्वाभिरन्विता ।**
**अन्नगन्धा च वैश्यानां पीतवर्णा प्रशस्यते ।।**[७]

**4.शूद्रा भूमिः** – शूद्रा भूमिः कृष्णवर्णीया, मद्यगन्धा कटुरसयुक्ता, काशसंयुता पश्चिमप्लवना च भवति ।एषा भूमिः निवासाय शुभदा न भवति।

**पश्चिमप्रवणा कृष्णा विकुण्ठा काशसंयुता ।**
**मद्यगन्धा मही धन्या शूद्राणां कटुका तथा ।।**[८]

स्पष्टार्थं ब्राह्माणादीनां वर्णानुरोधेन भूमेः शुभत्वविचारः -

| **वर्णः** | **ब्राह्मणः** | **क्षत्रियः** | **वैश्यः** | **शूद्रः** |
|---|---|---|---|---|
| प्लत्वविचारः | उत्तरप्लवः | पूर्वप्लवः | दक्षिणप्लवः | पश्चिमप्लवः |
| रसविचारः | मधुरः | काषायः | तिक्तः | कटुः |
| गन्धविचारः | घृतगन्धा | रक्तगन्धा | अन्नगन्धा | मद्यगन्धा |
| संयुक्तिः | दर्भयुक्ता | शरपतयुता | दुर्वायुक्ता | काशयुक्ता |
| वर्णविचारः | श्वेतवर्णा | रक्तवर्णा | पीतवर्णा | कृष्णवर्णा |

**<u>4.अष्टदिक्प्लवानुसारेण भूचयनविचारः</u>** –वास्तुशास्त्रे भूमेः शुभाशुभत्वविचारः प्लवत्वाधारेणापि क्रियते । अयं कश्चनप्रमुखः सिद्धान्तः भवति सामान्यत्वेन भूमेः प्लवत्वं ईशान-पूर्व-उत्तरदिशि शुभकरः भवति । यथा अष्टदिक्प्लवानुसारेण भूमेः फलविचारः-



(बृहद्वास्तुमाला श्लोक सं 37 - 39 )

**5.पृष्ठानुरोधेन भूमेः शुभाशुभत्वविचारः**–वास्तुशास्त्रे भूमेः शुभाशुभत्वविचारः पृष्ठानुरोधेनापि क्रियते यथा- **1 गजपृष्ठभूमिः**– दक्षिणपश्चिमनैर्ऋत्यवायव्यकोणोच्चा भूमिः गजपृष्ठा उच्यते । इयं भूमिः लक्ष्मीं धनम् आयुश्च वर्धयति ।

**दक्षिणे पश्चिमे चैव नैर्ऋत्ये वायुकोणके।**
**एभिरुच्चा यदाभूमिर्गजपृष्ठाऽभिधीयते ॥**
**गजपृष्ठे भवेद्वास: स लक्ष्मीधनपूरितः।**
**आयुवृद्धिकरो नित्यं जायते नात्र संशयः ॥**[९]

**2.कूर्मपृष्ठभूमिः**-मध्ये उच्चा, चतसृषु दिक्षु नीचा भूमिः कूर्मपृष्ठा उच्यते। एतस्यां भूमौ निवासेन उत्साहं धनधान्यं आयुश्च निरन्तरं वर्धते।

**मध्येत्युच्च भवेद्यत्र नीचं चैव चतुर्दिशम् ।**
**कूर्मपृष्ठा भवेद् भूमिस्तत्र वासौ विधीयते ॥**
**कूर्मपृष्ठे भवेद्वासो नित्योत्साहसुखप्रदः ।**
**धनधान्यं भवेत्तस्य निश्चितं विपुलं धनम्॥**[१०]

**3. दैत्यपृष्ठभूमिः-**पूर्व-ईशान-आग्नेयोच्चा पश्चिमनीचा भूमिः दैत्यपृष्ठा उच्यते । अस्यां निवासेन कदापि लक्ष्म्यनुग्रहः न भवति, धन-सुत-पशुनाशश्च भवति।

**पूर्वाग्निशम्भुकोणेषु उन्नतिश्च यदा भवेत् ।**
**पश्चिमे च यदा नीचं दैत्यपृष्ठोभिधीयते ॥**
**दैत्यपृष्ठे भवेद्वासो लक्ष्मीर्नायाति मन्दिरे ।**
**धनपुत्रपशुनां च हानिरेव न संशयः ॥**[११]

**4.नागपृष्ठभूमिः** -पश्चिमदीर्घा, दक्षिणपश्चिमोच्चा भूमिः नागपृष्ठा भवति । अस्यां निवासेन वासकर्ता उच्चाटनं लभेत् । अत्र च गृहस्वामिन: मृत्युः,स्त्रीहानिः, पुत्रनाशः सर्वदा शत्रुभयश्च भवति ।

**पूर्वपश्चिमयोर्दीर्घो दक्षिणोत्तर उच्चकः।**
**नागपृष्ठं विजानीयात् कर्तुरुच्चाटनं भवेत् ॥**
**नागपृष्ठे यदा वासो मृत्युरेव न संशयः ।**
**पत्नीहानिः पुत्रहानिः शत्रुवृद्धिः पदे पदे ॥**[१२]

**1. आकारवशाद् भूमेः शुभाशुभत्वविचारः**[१३] - भूमेः शुभाशुभत्वं वास्तु शास्त्रे आकारवशादपि भवति । तद्यथा -

-आयताकारभूमिः– आयताकारभूखण्डः द्विप्रकारको भवति । एकः समायातचतुर्भजः द्वितीयः विषमायातचतुर्भुजः। समायातचतुर्भजः शुभः भवति विषमायातचतुर्भुजः अशुभः भवति । यथा –

समायातचतुर्भजः



विषमायातचतुर्भुजः



**<u>वर्गाकारभूमिः</u>**– यस्य भूखण्डस्य दैर्घ्यविस्तारौ समानौ भवतः यत्र प्रत्येककोणः समकोणः (90 अंशस्य) यस्य चतस्रः भुजाः समाना भूत्वा समानान्तरे भवति सा वर्गाकारा भूमिः इत्युच्यते । इयं भूमिः अतीवशुभफलप्रदायिनी भवति । वर्गाकारभूमिः



**वृत्ताकारभूमिः–** गोलाकारभूमिः वृत्ताकार भूमिः इत्युच्यते । इयं भूमिः शुभप्रदा । अस्यां यदि शैक्षिकभवनानां निर्माणं क्रियते चेत् शुभदायकं भवति ।अत्र निर्माणं वृत्ताकारमेव भवेत् ।



**अशुभफलप्रदायकभूखण्डा:_-**



**2. भूमेः विस्ताराधारेण शुभाशुभत्वविचारः** - सामान्यरूपेण भूखण्डस्य विस्तारः यदि ईशानकोणे-उत्तरे-पूर्वे च भवति चेत् तादृशः भूखण्ड: शुभ: भाग्यप्रदश्च भवति । यथा -




अथ च भूखण्डस्य विस्तारः यदि नैऋत्ये, वायव्ये, आग्नेये च भवति चेत् तादृशः भूखण्ड: अशुभप्रद: भवति। यथा -



**8. भू–परीक्षणम्-** 1.गृहनिर्माणाय प्रकल्पितभूखण्डे गृहस्वामिन: एकहस्तप्रमाणं गर्तं विधाय तयैव मृत्तिकया पुनः तं गर्तं पूरयेत्। एवं क्रियमाणे सति मृतिका अधिका भवति चेत् सः भूखण्ड: शुभप्रदः भवति । मृतिका यदि गर्ततुल्या भवति चेत् सामान्य: भूखण्ड: भवति। मृत्तिका न्यूना भवति चेत् हानिकरः भूखण्ड: भवति।

2. भूस्वामिन: हस्तप्रमाणेन गर्तं विधाय जलेन पूरयेत् एवं शतपदं दूरं गत्वा पुनः गर्तसमीपे आगत्य यदि गर्ते तावदैव जलं भवति चेत् शुभं यदि जलस्य चतुर्थो भागः नश्यते चेत् मध्यमा भूमिः जलस्य अर्धभागः अवशिष्यते चेत् अशुभा भूमिः भवति ।यथा –

**कर्तुश्च हस्तप्रमितं खनित्वा खातं पयोभिः परिपूरितं चेत् ।**
**वसेत्सुखार्थी परिपूरितं स्याच्छुष्कंभवेत्तत्क्षनमेव नाशः ।।**
**स्थिरे जले वै स्थिरता गृहस्य ............................।।**[१४]

**9. भू–दोषाः तेषां निवारणोपायाश्च (शल्याशल्यविचारः)** -या भूमिः स्फुटिता, शल्ययुक्ता, नीरसा, सर्पादियुक्ता, वल्मीकयुक्ता नतोन्नतस्थलयुक्ता असमाना च भवति सा भूमिः निषिद्धा भूमिः इत्युच्यते। सामान्यत्वेन एषा भूमिः परिहर्तव्या।

**स्फुटिता च सशल्या च वल्मीका रोहिणी तथा।**
**दूरतः परिहर्तव्या कर्तुरायुर्धनापहा ।।**[१५]

भूमेः अधः अस्थि-भस्म-अङ्गार–केश–कपालाद्यमाङ्गलिकपदार्थाः शल्यशब्देन उच्यते। एते पदार्थाः गृहस्वामिन: कृते अशुभफलप्रदाः भवन्ति । एतेषां पदार्थानां ज्ञानाय नैके विधयः वास्तुशास्त्रे वर्णितास्सन्ति । सामान्यतया गृहनिर्माणात् प्रागेव भूमेः एकपुरुषं यावत् भूखननं कृत्वा तत्र शुभमृत्तिका-पाषाणखण्डादिपदार्थाद्वारा सा भूमि: पूरयेत्। अनेन शल्यदोषः न भवति। यतोहि उच्यते –

**पुरुषाद्यः स्थितं शल्यं न गृहे दोषदं भवेत् ।।**

**भूमिशुद्धिः–**तत्र सम्मार्जनेन,गवांगोमयलेपनेन,गोमूत्रेण तथा च गङ्गाजलसेचनेन,मृत्तिकायाः निष्कासनेन, गवां परिवासेन च भूमेः शुद्धिकरणं भवति।

**सम्मार्जनोपाञ्जनेन सेकेनोल्लेखनेन च।**
**गवांच परिवासेन भूमिः शुध्यति पञ्चभिः ।।**

वासयोग्यप्रशस्तभूमेः लक्षणम् -तत्र वास्तुशास्त्रकाराणामभिमते यस्यां भूमौ उत्तमौषधि-लता-वृक्षादयाः भवन्ति , भूमेः स्वाद: मधुरः, सुगन्धा, समतला, परिश्रमहरा दोषशून्या च भवेत् चेत् सा भूमिः धनं सुखं शान्तिं च ददाति । इत्युक्ते एतादृशी भूमिः अत्यन्तप्रशस्ता भवति। यथोक्तम् आचार्यवराहमिहिरेण-

**शस्तौषधिद्रुमलता मधुरा सुगन्धा**
**स्निग्धा समानसुखदा च मही नराणाम्।।**
**अप्यध्वनि श्रमविनोदमुपागतानां**
**धत्ते श्रियं किमुत शाश्वतमन्दिरेषु ।।**[१६]

अपि च

**मनसश्चक्षुषोर्यत्र सन्तोषो जायते भुवि।**
**तस्यां कार्यं गृहं सर्वैरिति गर्गादिसम्मतम्।।**[१७]

**उपसंहारः-** अस्मिन् संसारे मानवस्य जीवनयापनाय भोजन-आवास-वस्त्राणि इत्येतानि मुलभूतानि आवश्यक्ता: भवन्ति । जीवनं यापयितुं भोजनं, शरीरमाच्छादयितुं वस्त्रं वासार्थं वा आश्रयार्थं

आवासम् आवश्यकं भवति ।आवासः मानवस्य आधारभूत आवश्यकता भवति एतेन विना जीवनस्य प्रक्रिया एव सम्यक् न प्रचलति एतदर्थं गृहस्य निर्माणाय वास्तुशास्त्रस्य आवश्यकता भवति। तत्र वास्तुशास्त्रं मानवस्य कृते सुख-शान्तिपूर्णं वासव्यवस्था कथं भवेत् इत्यस्यैव सिद्धान्तान प्रतिपादयति। तत्रापि गृहनिर्माणस्य प्रथमं सोपानं भवति ग्राम-चयनं, भू-चयनन्च । एतस्य भू-चयनस्य गृहनिर्माणे अतीवमहत्वं भवति यतोहि भूमिः यथा भवति तदुपरि गृहनिर्माणमपि तादृशमेव भवति अतः भू-चयनं वास्तुशास्त्रे प्रतिपादितनियमानुसारेण सिद्धान्तानुसारेण एव कर्तव्यं येन मानव: इह लोके सुखमयं जीवनं यापयेत् ।

**संदर्भग्रन्थसूची-**


१. ग्रामादेरनुकूलत्वं दिशो भूतग्रहस्य च । (वास्तुसारः-
वास्तुविधानप्रकरणं श्लो॰ 16)
२. (मुहूर्तचिन्तामणिः वा.प्र. श्लो 01 )
३. बृहदवास्तुमाला, श्लोक सं. 19 (मुहूर्तचिन्तामणिः वा.प्र. श्लो 02 )
४. बृहदवास्तुमाला, श्लोक सं. 18
५. वास्तुरत्नाकरः श्लो ४४
६. वास्तुरत्नाकरः श्लो ४५
७. वास्तुरत्नाकरः श्लो ४६
८. वास्तुरत्नाकरः श्लो ४७
९. बृहद्वास्तुमाला श्लोक सं 82 - 83
१०. बृहद्वास्तुमाला श्लोक सं 84-85
११. बृहद्वास्तुमाला श्लोक सं 86 - 87
१२. बृहद्वास्तुमाला श्लोक सं 88 - 89
१३. आयते सिद्धयस्सर्वाश्चतुरस्त्रे धनागमः ।वृत्ते तु बुद्धिवृद्धिः स्याद्भद्रं भद्रासने भवेत् ।।
चक्रे दारिद्र्यमित्याहुर्विषमे शोकलक्षणम् ।राज्भीतिस्त्रिकोणे स्याच्छकटे तु धनक्षयः ।।
दण्डे पशुक्षयं प्राहुः शूर्पे वासे गवां क्षयः । गोव्याघ्रबन्धने पीडा धनुः क्षेत्रे भयं महत् ।। (बृहद्वास्तुमाला श्लोक सं ९० – ९२)
१४. बृहदवास्तुमाला - श्लो 108
१५. वास्तुरत्नाकरः श्लोक ६१
१६. बृहत्संहिता वास्तुविद्याध्यायः श्लो 88
१७. बृहदवास्तुमाला - श्लो 93